# संस्कृत मञ्जरी

## (दिल्ली संस्कृत अकादमी की त्रैमासिक साहित्यिक पत्रिका)

"संस्कृत मञ्जरी" दिल्ली संस्कृत अकादमी, दिल्ली की प्रमुख साहित्यिक पत्रिका है। इसका उद्देश्य संस्कृत में अधिकाधिक नवीनतम प्रवृत्तियों को प्रकाश में लाना है, जो संस्कृत के प्रचार प्रसार में तथा राष्ट्रीय चेतना एवं जनजागरण में सहायक हों।

इस त्रैमासिक पत्रिका के लिए आदरणीय लेखक बन्धुओं से हमारा अनुरोध है कि वे सरल एवं सुबोध शैली में रोचक एवं पठनीय समाग्री प्रेषित् करने की कृपा करें। कथा, लघु उपन्यास, एकांकी, कविता, गीति संस्करण, लेख, प्रहसन आदि विधाओं में प्रस्तुत सामग्री अपेक्षणीय हैं। लेख कवितादि स्वच्छ एवं शुद्ध होनी चाहिये।

लगभग सौ पृष्ठों की इस सुन्दर साजसज्जा से संचलित संस्कृत मजरी पत्रिका का वार्षिक मूल्य ३२/- रूपये तथा एक अंक का ८/- रूपये रखा गया है। संस्कृतानुरागी पाठकों से अनुरोध है वे इस पत्रिका के ग्राहक बन संस्कृत के प्रचार प्रसार में सहयोग प्रदान करें। पत्रिका शुल्क केवल मनीआर्डर द्वारा ही भेंजें।

श्रीकृष्ण सेमवाल
सचिव, दिल्ली संस्कृत अकादमी,
कमरा नं. २२४, पुराना सचिवालय,
दिल्ली-११००५४.

# कार्यसिद्धिकराः गुणाः

शास्त्रेषु निष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी।
कालावबोधः प्रतिभानवत्वम्
एते गुणाः कामदुघाः क्रियासु॥

– भवभूतिः (मालतीमाधवे-३-११)

"शास्त्रेषु आसक्तिः, शास्त्राणां सम्यक् अवगतिः, पाण्डित्यं, माधुर्यादिगुणयुक्ता वाणी, कालाकालविवेकः, तत्कालस्मरणं (समयस्फूर्तिः) एते कार्यसाधकाः गुणाः"।

दूतीगुणाः के इति चिन्तयन् कथानायकः यद्यपि एतं श्लोकं वदति, तथापि अत्र प्रस्तुतः विचारः तु सार्वकालिकः। विभिन्नेषु क्षेत्रेषु, विभिन्नेषु उद्योगेषु उद्युक्ताः स्मः वयं सर्वे अपि। एतादृशैः अस्माभिः के गुणाः आर्जनीयाः इति सूचयति एषः श्लोकः।

प्रथमः गुणः शास्त्रनिष्ठा। यस्मिन् क्षेत्रे वयं कार्यं कुर्मः तत्क्षेत्रसम्बन्धिज्ञानम् एव शास्त्रम् इति वक्तुं शक्नुमः। 'स्वक्षेत्रविषयकं ज्ञानं मम स्यात्' इति भावना अस्मासु सदा स्यात्। अन्यथा प्रगतिः दुस्साध्या। द्वितीयः गुणः– सहजावगतिः। स्वक्षेत्रे काले काले या अभिवृद्धिः जायमाना भवति सा तत्तत्काले प्राप्तव्या अस्माभिः। समकालिकज्ञानं प्रगतेः सोपानम्। तृतीयः गुणः– पाण्डित्यम्। सङ्गृहीतस्य स्वक्षेत्रज्ञानस्य सदा स्मरणं, प्राप्ते अवकाशे प्रकाशनं च पाण्डित्यम् इति वक्तुं शक्नुमः।

पूर्वोक्ताः त्रयः गुणाः क्षेत्रसम्बन्धिनः। अतः क्षेत्रानुगुणं तेषां स्वरूपे भेदः भवितुम् अर्हति। कविना श्लोकस्य अन्ते पुनः त्रयः गुणाः उक्ताः– मधुरः व्यवहारः, उचितानुचितविवेकः, समयप्रज्ञा चेति। एते सर्वसमानाः गुणाः। सर्वेषु मानवेषु एते गुणाः अवश्यं भवेयुः।

एवं त्रिभिः तत्तत्क्षेत्रसम्बन्धिभिः गुणैः, त्रिभिश्च सर्वसमानैः गुणैः च यदा मानवः युक्तः भवति तदा कार्यसिद्धिः करस्थिता भवति इत्यत्र नास्ति सन्देहः।

# Don't you owe the














# चन्दमामा

फेब्रवरी-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००




# चन्दमामा

संस्थापकः – 'चक्रपाणिः' सञ्चालकः – 'नागिरेड्डी'

'कश्चित् सदा हसन्मुखी उत्साही च कथं भवेत्?' एषः प्रश्नः कैश्चित् विद्यालयबालकैः पृष्टः। उत्तरं च एवम् आसीत्– कठिनपरिश्रमः, प्रामाणिकता, देशप्रेम, कर्तव्यपरायणता च अत्र कारणानि इति।

एतस्य उत्तरस्य दाता न अन्यः, अपि तु अस्माकं राष्ट्रपतिः वेङ्कटरामनवर्यः एव। देहलीनगरे विद्यालयबालकैः आयोजिते विशिष्टे 'पत्रकारसम्मेलने' तेन एवम् उक्तम्।

तेन यत् उक्तं तत् न केवलं बालकैः, अपि तु सर्वैः अपि अनुसर्तुं योग्यम् अस्ति। लोके सर्वोऽपि कस्मिंश्चित् कार्ये निरतः भवति एव। कार्यस्य क्षेत्रं स्वरूपं च कदाचित् विभिन्नं स्यात् नाम। किन्तु कार्यश्रद्धा उपेक्षया द्रष्टव्यः विषयः तु न। निश्चिते अवधौ निश्चितपरिमाणकं कार्यं करणीयम् एव। उद्योगदात्रा उद्योगिना चापि कार्यम् आदरेण द्रष्टव्यम्। परस्परयोः मध्ये यः सन्धिः अस्ति तस्य पावित्र्यं तत्सम्बद्धभावनाः च पक्षद्वयेन अपि सदा मनसि स्थापनीयाः। जनाः यावत् कठिनपरिश्रमं कुर्वन्ति तावत् प्रगतिः अभिवृद्धिः वा साधिता भवति। अत्र प्रत्यक्षम् उदाहरणं जर्मनी-जपानदेशौ, यौ च द्वितीयजागतिकयुद्धसन्दर्भे सर्वनाशं प्राप्तवन्तौ आस्ताम्। किन्तु पुराणप्रसिद्धः पिनिक्सपक्षी इव तौ भस्मनः एव उद्भूय स्वप्रगतिं साधितवन्तौ। इदानीं तौ उभौ अपि अजेयौ स्तः यत् तत्र प्रधानं कारणम् अस्ति– कठिनपरिश्रमशीलता।

प्रामाणिकतायाः विषये पुनः वक्तव्यं साग्रहं निवेदनीयं वा न किञ्चित् अस्ति। देशप्रेम जनेषु अत्यन्तम् अनिवार्यं, यतः देशस्य निर्मातारः जनाः एव। यदि जनेषु परस्परप्रीतिः स्यात् तर्हि ते अन्यस्य विषये उत्तमानि एव वचनानि वदन्ति। सदाशयम् एव प्रकटयन्ति, अन्यस्य पीडां मनसा अपि न सहन्ते। यस्य देशस्य जनाः प्रीतिपात्राणि प्रीतिप्रदर्शकाः च भवन्ति तस्य देशस्य गौरवं वर्धते। तदा एव तन्निवासिनः स्वदेशविषये अभिमानं वहन्ति।

अन्तिमः अंशः कर्तव्यपरायणता। भारतीयानि शास्त्राणि एतद्विषये बहुधा वदन्ति। एतावदेव न, कार्यसमये फलविषये अनासक्तिः भवतु इत्यपि प्रतिपादयन्ति ते। कस्य कार्यस्य किं फलम् इति दैवेन पूर्वम् एव निर्णीतं भवति। 'अहं निमित्तमात्रं, फलाफलस्य सम्बन्धः मम नास्ति' इति यदा कर्ता चिन्तयति तदा तस्य मुखे मन्दहासः विलसति, हृदये च तृप्तिः चिरं तिष्ठति।

सम्पुटः–८ फेब्रवरी–१९९२ सञ्चिका–११

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००







रसप्रश्नाः–

# रणरङ्गे रावणः

(रणरङ्गे राक्षसवीराः सेनानायकाः च बहवः हताः। रावणपुत्राः अपि हताः। ततः रावणस्य प्रियपुत्रः इन्द्रजित् रणरङ्गं गतवान्। सोऽपि हतः अभवत्। तदा असहायः रावणः एव रणरङ्गं गन्तुम् उद्युक्तः। एतदनन्तरकालीनां घटनाम् आधारीकृत्य वाल्मीकिरामायणकथानुसारम् अधः केचन प्रश्नाः सज्जीकृताः। युक्तानि उत्तराणि जानन्तु।)

I. पुत्रस्य इन्द्रजितः वधं श्रुत्वा शोकान्धः रावणः सीताम् एव हन्तुम् उद्युक्तः। तदा कः तं तस्मात् प्रयत्नात् निवारितवान्?

(अ) सुपार्श्वः नाम मन्त्री। (आ) पारिपार्श्वः नाम सेनाधिपतिः।
(इ) रावणपत्नी मन्दोदरी।

II. पुत्रवधं श्रुत्वा शोकार्तः रावणः बलाध्यक्षेषु उत्साहं सम्पूर्य तान् युद्धार्थं प्रेषितवान्। तदा रामः केन अस्त्रेण शत्रून् नाशितवान्?

(अ) पाशुपतास्त्रेण। (आ) गान्धर्वास्त्रेण। (इ) किन्नरास्त्रेण।

III. सेनानायकाः अपि यदा हताः अभवन् तदा रावणः स्वयं युद्धार्थम् उद्युक्तः। क्रुद्धः सः केन अस्त्रेण किं कृतवान्?

(अ) तामसास्त्रेण कपीन् दग्धवान्। (आ) वारुणास्त्रेण कपीन् बद्धवान्। (इ) रौद्रास्त्रेण कपीन् मूर्च्छितान् कृतवान्।

IV. रावणः केन अस्त्रेण लक्ष्मणं मूर्च्छितं कृतवान्?

(अ) दिव्येन ब्रह्मास्त्रेण। (आ) सामान्येन अस्त्रेण।
(इ) शक्तिनामकेन आयुधेन।

V. मूर्च्छां गतस्य लक्ष्मणस्य चिकित्सा केन कृता?

(अ) जाम्बवता। (आ) विषेणेन। (इ) सुषेणेन।

VI. हनूमता सञ्जीवन्यादयः ओषधयः यतः आनीताः तस्य पर्वतस्य नाम किम्?

(अ) सञ्जीवनीपर्वतः इति। (आ) ओषधिपर्वतः इति।
(इ) हिमवत्पर्वतः इति।

उत्तराणि–

I. – (अ). II. – (आ). III. – (अ). IV. – (इ). V. – (इ). VI. – (आ).




# धैर्यसाहसयोः निमित्तं नोबेल्पुरस्कारः

एतस्य वर्षस्य नोबेल्-पारितोषिकं म्यान्मार (बर्मा) देशीयायै श्रीमत्यै आङ्गसान् सूक्यीवर्यायै दत्ता अस्ति। एषा वार्ता भारतीयानां निमित्तम् अपि सन्तोषदायिनी एव। यतः आङ्गसान् सूक्यीवर्यायाः प्राथमिकः विद्याभ्यासः देहलीनगरे एव प्रवृत्ता। तत्काले तस्याः माता श्रीमती खिन् क्यी भारते बर्मादिशीयराजदूता आसीत्।

पुत्रद्वयवत्याः आङ्गुसान् सूक्यीवर्यायाः वयः ४६ वर्षाणि। प्रजाप्रभुत्वस्य मानवाधिकाराणां च रक्षणार्थं ये कार्यं कुर्वन्ति तेषु आदरवती आङ्गुसान् सूक्यीवर्या शान्तियुतान्दोलनद्वारा सामाजिककार्यं करोति। 'एषु दिनेषु एतया क्रियमाणं शान्तियुतम् आन्दोलनम् एशियाखण्डे एव अपूर्वम्' इति उक्तवन्तः सन्ति नोबेल्समितिसदस्याः।

आधुनिकबर्मानिर्माता इति ख्यातस्य आङ्गुसान्वर्यस्य पुत्री एषा श्रीमती सूक्यी। यदा आंग्लाः भारतं पालयन्ति स्म तदा बर्मादिशः भारतस्य अङ्गम् आसीत्। आङ्गुसान्वर्यः जनेषु जागरणम् आनीय बर्मादिशं स्वतन्त्रं कृतवान् आसीत्। किन्तु दौर्भाग्यवशात् १९४७ तमे वर्षे जुलैमासे १९ दिनाङ्के अष्टभिः सहचरैः युक्तः आङ्गसान्वर्यः दुष्टैः हतः अभवत्। तदा सूक्यीवर्या द्विवर्षीया आसीत्।

देहलीनगरे पदवीं प्राप्य सूक्यीवर्या आक्सफर्ड्विश्वविद्यालयं प्रविश्य राज्य-

शास्त्रे अर्थशास्त्रे च उन्नतं विद्याभ्यासं कृतवती। अनन्तरं लण्डन्विश्वविद्यालये, ऐक्यराज्यसमितेः कार्यालये च किञ्चित्कालम् उद्योगं कृतवती सा। ततः आंग्लेयं कञ्चित् परिणीय इंग्लेण्ड्देशं गतवती सा। ततः संशोधननिमित्तम् अस्माकं देशम् आगत्य सिम्लास्थां भारतीयोच्च-विद्याभ्याससंस्थां (इण्डियन् इन्स्टिट्यूट् आफ् अड्वान्स्ड् स्टडीस्) प्रविष्टवती। तत्र स्थिता सा पुस्तकद्वयं लिखितवती। स्वपितुः चरित्रं तत्र अन्यतमम्। अपरं च बर्मादेशविषये बालान् उद्दिश्य लिखितं 'लेट् अस् विसिट् बर्मा' नामकं पुस्तकम्।

ततः सा संशोधनकार्यम् अनुवर्तयन्ती लण्डन्नगरं गतवती। किन्तु अत्रान्तरे तया वार्ता प्राप्ता यत् माता तीव्रम् अस्वस्था अस्ति इति। मातुः अस्वास्थ्यवार्तां श्रुत्वा तया रङ्गून् गतम्।

तदा बर्मादेशे नेवीसूवर्यस्य शासनं प्रचलति स्म। तत्काले तत्र प्रजाः नितरां कष्टपीडिताः आसन्। १९८८ तमे वर्षे स्वदेशं प्रत्यागता एषा जनान्दोलनस्य नायकत्वं निरूढवती। शासनम् एतस्याः व्यवहारेण कुपितम् अभवत्। तस्मिन् एव वर्षे अगस्ट्मासे अष्टमे दिनाङ्के प्रवृत्तं छात्रान्दोलनं सर्वकारेण निर्दाक्षिण्यं मर्दितम्। प्रजाप्रभुत्वस्य प्राप्त्यर्थं त्रिंशद्वर्षेभ्यः यत् जनान्दोलनं प्रचलति तत् व्यर्थं न स्यात् इति आलोच्य सूक्यीवर्या सप्टेम्बर्मासे १२ दिनाङ्के प्रवृत्ते समावेशे प्रतिपादितवती यत् तात्कालिकं प्रभुत्वं स्थापितं स्यात्, तस्य च पर्यवेक्षणे देशे निर्वाचनं प्रचलेत् इति। ततः एतस्याः अन्यनायकद्वयस्य च नेतृत्वे 'नेषनल् लीग् फार् डेमाक्रसी' (एन्.एल्.डि.) स्थापितम्। तस्मिन् एव मासे २४ दिनाङ्के सा एतस्य राष्ट्रियप्रजाप्रभुत्वपक्षस्य प्रधानकार्यदर्शिनी जाता।

१९८९ तमे वर्षे जुलैमासे १९ दिनाङ्के पितुः आङ्गसानूवर्यस्य मरणस्य ४२ तमस्य स्मारकोत्सवस्य निमित्तं तया महती शोभायात्रा व्यवस्थापिता। अनन्तरदिने एव सर्वकारेण सा गृहबन्धने स्थापिता। तथापि १९९० तमे वर्षे प्रवृत्ते सार्वत्रिकनिर्वाचने तस्याः पक्षेण एव जयः प्राप्तः। किन्तु शासनेन जनानाम् अभिप्रायः न पुरस्कृतः। गतवर्षे एतस्य देशस्य नाम 'म्यानमार्' इति परिवृत्तम् अस्ति, न तु शासनम्। प्रजाप्रभुत्वम् इतोऽपि न आगतं तत्र। सूक्यीवर्या इतोऽपि गृहबन्धने एव अस्ति। तस्याः व्यक्तिस्वातन्त्र्यम् अपहृतम् अस्ति सर्वकारेण।

प्रजाप्रभुत्वनिमित्तं मानवताधिकारस्य च निमित्तं सूक्यीवर्यया शान्तिमार्गेण यत् स्वातन्त्र्यान्दोलनं क्रियमाणम् अस्ति तत् नोबेल्समित्या भृशं प्रशंसितम्। तस्याः अकुण्ठितां दीक्षां, अचञ्चलं धैर्यं साहसं च मनसि निधाय तया समित्या तस्यै नोबेल्पारितोषिकं दत्तम्।



# मन्त्रवादिनीपुत्री

पर्वतपुरसमीपस्थे अरण्ये रक्तमृत्तिकया निर्मितः कश्चन लघुपर्वतः आसीत्। तत्र काचित् वृद्धा मन्त्रवादिनी कुटीरं निर्माय वसति स्म। तया कमला नाम कन्या पोषिता आसीत्। कमला इदानीं प्राप्तवयस्का। वृद्धायाः योगक्षेमं श्रद्धया निर्वहति स्म कमला।

कदाचित् पञ्चविंशतिवर्षीयः कश्चन युवकः तस्याः कुटीरस्य समीपम् आगतवान्। वृद्धा मन्त्रवादिनी कुटीरस्य पुरतः मञ्चस्य उपरि शयनं कृतवती आसीत्। कमला वृद्धायाः केशप्रसाधने निरता आसीत्। वृद्धा मन्त्रवादिनी कुरूपिणी। कमला तु परमसुन्दरी।

वृद्धया तरुणस्य आगमनं ज्ञातम्। सा तीक्ष्णदृष्ट्या युवकं पश्यन्ती– "अये उद्धत! कियत् धाष्ट्यं भवतः? मम कुटीरस्य समीपम् आगत्य अपि सधैर्यं स्थितवान् खलु?" इति क्रोधेन गर्जितवती।

तत् श्रुत्वा युवकः शान्तेन एव स्वरेण उक्तवान्– "अम्ब! मरणार्थम् एव एतत् अरण्यम् आगतवतः मम भीतिः कुतः? भवती मन्त्रवादिनी खलु? मन्त्रदण्डस्य साहाय्येन मां कुक्कुटरूपेण परिवर्त्य खादतु तावत्। मरणम् एव प्रियं मम। मम जीवनयात्रा समाप्ता भवतु नाम" इति।

तदा मन्त्रवादिनी आश्चर्यं प्रकटयन्ती– "अये, दृढकायस्य युवकस्य भवतः एतावान् निर्वेदः किमर्थम्? तारुण्ये महान् उत्साहः स्यात्। तरुणः कश्चित् अहं चिरञ्जीवी इति भावयित्वा स्फूर्तिमूर्तिः स्यात्। भवान् इव निर्विण्णः न। आगच्छतु अत्र। किं प्रवृत्तम् इति वदतु तावत्" इति अवदत्।

कमला अन्तः गत्वा पानार्थं जलम् आनीय



दत्तवती। तत् जलं वेगेन पीत्वा उक्तवान् तरुणः— "सुन्दरि! जलं दत्तवती यत् तदर्थं धन्यवादाः। अम्ब! मम इतिवृत्तं शृणोतु तावत्। मम नाम शूलपाणिः इति। प्रतिवेशिन्यां तरुण्याम् अहम् अनुरक्तः अभवम्। प्रतिवेशिन्याः तरुण्याः नाम नागवेणी इति। नागवेण्याः पिता तस्याः निमित्तं वरान्वेषणं कुर्वन् अस्ति। अहं तस्य समीपं गत्वा उक्तवान्— 'अहं भवत्पुत्रीं परिणेष्यामि' इति। सः मां निर्दयं तर्जयित्वा— 'अये वराक! दैनन्दिनभोजनार्थं यस्य समीपे धनं नास्ति तादृशः भवान् मम पुत्रीं परिणीय कथं पोषयेत्? निर्गच्छतु' इति उक्त्वा ततः प्रेषितवान्। मानहीनस्य मानवस्य जीवनेन किम्? अतः अहं मरणं प्राप्तुम् इच्छन् अत्र आगतवान्" इति।

"एवं वा? तिष्ठतु तावत्" इति उक्त्वा ततः निर्गता वृद्धा मन्त्रवादिनी अल्पे एव काले कृष्णवर्णीयेन केनचित् कारण्डवेन सह प्रत्यागतवती।

कारण्डवं दृष्ट्वा पृष्टवान् शूलपाणिः— "अम्ब! अद्य मदर्थम् एतस्य मांसेन पाकं करोति वा भवती?" इति।

"एषः कारण्डवः न पाकार्थम्, अपि तु भवते दातुम्। अण्डानि ददातु इति भवान् आदिशति चेत् एषः कारण्डवः भवान् यावत् इच्छति तावत् ददाति। अनन्तरम् 'अण्डानां विक्रयणतः धनं सम्पाद्य भवतः पुत्रीं पोषयिष्यामि' इति भाविश्वशुरं वदतु। तदा सः कुतो वा पुत्रीं भवते न दद्यात्? पश्याम तावत्" इति साभिमानम् उक्तवती मन्त्रवादिनी।

शूलपाणिः कारण्डवेन सह ततः निर्गतवान्। अनन्तरदिने सायङ्काले म्लानवदनः सन् सः कारण्डवेन सह प्रत्यागतवान्।

"किं भोः एतत्? मुखे म्लानता दृश्यते? किं प्रवृत्तं तत्र?" इति आश्चर्येण पृष्टवती मन्त्रवादिनी।

पुष्पाणाम् अवचयने रता कमला अन्तः गत्वा जलम् आनीय दत्तवती। जलं वेगेन पीत्वा— "कारण्डवं दृष्ट्वा भावी श्वशुरः

नितरां कुपितः। 'मया पालितः श्वेतः मार्जारः शुनकः वा यदि एतं खादेत् तर्हि अग्रे का गतिः भवतः? एतादृशं तन्त्रं मम पुरतः मास्तु' इति उक्त्वा तर्जयित्वा मां प्रेषितवान् सः'' इति उक्तवान् शूलपाणिः।

मन्त्रवादिनी क्षणकालम् आलोच्य एकं वेत्रनिर्मितं कण्डोलं शूलपाणये यच्छन्ती उक्तवती– ''एतं कण्डोलम् अधोमुखं करोति चेत् भवता अपेक्षितानि शाकानि प्राप्यन्ते। 'तेषां विक्रयणं कुर्वन् धनं सम्पाद्य भवतः पुत्रीं पोषयिष्यामि' इति भाविश्वशुरं वदतु तावत्'' इति।

शूलपाणिः ततः निर्गत्य अनन्तरदिने सायङ्काले कण्डोलं शिरसि संस्थाप्य कुटीरसमीपं गत्वा खेदेन निश्श्वसितवान्।

''एतत्सन्दर्भे पुनः किं प्रवृत्तम्? मूर्खः भवतः भावी श्वशुरः किम् उक्तवान्?'' इति पृष्टवती मन्त्रवादिनी।

''कण्डोलं प्रदर्श्य ऐश्वर्यं सम्पादयिष्यामि इति वदति वा मूर्ख! अल्पः अग्निः अपि भवतः कण्डोलं भस्मीकर्तुम् अर्हति। अनन्तरं किं, मम पुत्र्या किं भस्म खादनीयम्? निर्गच्छतु इतः इति उक्त्वा सः दुष्टः मां गृहात् गलग्रहं निष्कासितवान्'' इति उक्तवान् शूलपाणिः।

क्षणकालं विचिन्त्य वृद्धा कुटीरस्य अन्तः गत्वा एकां प्राचीनां काष्ठनिर्मितां पेटिकाम् आनीय शूलपाणये दत्त्वा– ''एषा पेटिका महिमान्विता अस्ति। एताम् उद्घाट्य यत्



प्रार्थ्यते तत् प्राप्यते। अतः एताम् उद्घाट्य दृष्ट्वा सन्तुष्टः भवतः भावी श्वशुरः भवन्तं नमस्कृत्य भवते स्वपुत्रीं दास्यति। एतत्सन्दर्भे जयः भवतः एव। गच्छतु। सुखेन जीवतु तावत्'' इति उक्तवती।

शूलपाणिः पेटिकया सह ततः गत्वा अनन्तरदिने सायं म्लानवदनः सन् प्रत्यागत्य– ''एषा पेटिका अत्र जीर्णा भवतु तावत्'' इति वदन् पेटिकां दूरे क्षिप्तवान्।

''मूर्खः भवतः श्वशुरः एताम् अपूर्वां पेटिकाम् अपि अल्पां भावयति वा?'' इति आश्चर्येण पृष्टवती मन्त्रवादिनी।

''अम्ब! इतः परं किमपि किमपि दत्त्वा तं दुष्टं नागवेणीपितरं तर्पयतु इति मां मा वदतु।



इतः परं वराकस्य तस्य मुखम् अपि न द्रक्ष्यामि। पुत्रीसहितः सः दग्धः भवतु नाम'' इति कोपेन उक्तवान् शूलपाणिः।

''किम् उक्तं तेन? माम् अपि निन्दितवान् वा मूर्खः सः?'' इति उद्वेगेन पृष्टवती मन्त्रवादिनी।

''अम्ब! भवती किमर्थम् एवम् उद्विग्ना भवति? वार्धक्यं, दुर्बलता, उद्वेगः च परस्परं सम्मिलिताः चेत् कष्टं खलु?'' इति वदन्ती कमला शूलपाणये आनीतं जलं वृद्धायै दत्तवती।

तत् जलं पीत्वा उद्वेगं निवार्य उक्तवती मन्त्रवादिनी– ''इदानीं विस्तरेण वदतु – तेन भवतः भाविश्वशुरेण किम् उक्तम् इति'' इति।

''सः न मम भावी श्वशुरः। नाहं तस्य पुत्रीं परिणेष्यामि वा। वराकः सः। अपूर्वां पेटिकां दृष्ट्वा सः आश्चर्यचकितः इति तु सत्यम्। किन्तु अनन्तरक्षणे मां तीक्ष्णदृष्ट्या दृष्ट्वा– 'एतानि अपूर्ववस्तूनि कुतः आनयति भवान्? मन्त्रवादिनी एतानि खलु दत्तवती? यदि तस्याः स्नेहः भवतः स्यात् तर्हि तस्याः पुत्रीम् एव परिणयतु भवान्। किमर्थम् अत्र आगत्य माम् एवं पीडयति? निर्गच्छतु इतः। भवान् अपि मन्त्रवादी सन् अरण्ये एव निवसतु। इतः परं पुनरपि अत्र आगतं चेत् भवतः शिरः भञ्जयिष्यामि' इति उक्तवान् सः'' इति उक्तवान् शूलपाणिः।

एतत् वचनं श्रुत्वा कार्यव्याजेन अन्तः गतवती कमला।

वृद्धा मन्त्रवादिनी क्षणकालम् आलोच्य ''तेन वस्तुस्थितिः एव उक्ता। योग्या सूचना दत्ता। वृद्धा अहम् इतोऽपि कियत्कालं जीवेयम्? मम अनन्तरम् एतस्याः पुत्र्याः आश्रयः कोऽपि आवश्यकः खलु? अतः यदि भवान् अङ्गीकुर्यात् तर्हि कमलां भवते दातुम् अहं सिद्धा'' इति उक्तवती मन्त्रवादिनी।

''अहं तु सिद्धः एव। एतादृशी सुन्दरी यदि प्राप्येत तर्हि को वा निराकुर्यात्?'' इति सहर्षम् उक्तवान् शूलपाणिः।

''अस्तु तावत्। विवाहः कदा कुत्र प्रचलतु?'' इति पृष्टवती मन्त्रवादिनी।

''विवाहः यदा कदापि यत्र कुत्रापि भवितुम् अर्हति'' इति उक्तवान् शूलपाणिः। ततः दिनद्वयाभ्यन्तरे कमला-शूलपाण्योः विवाहः सम्पन्नः। पत्न्या सह यदा शूलपाणिः नगरं प्रति प्रस्थितः तदा मन्त्रवादिनी पृष्टवती– ''मया पूर्वं दत्तानि वस्तूनि न नयति वा?'' इति।

''तानि मा सन्तु अम्ब! स्वशक्तौ विश्वासः मम। सद्यः एव मया उद्योगः प्राप्तः अस्ति। अतः ततः यावत् प्राप्यते तावत् पर्याप्तं मम। मायाशक्तिः चिरकालम् उपकर्तुं नार्हति। अतः तानि न इच्छामि अहम्'' इति उक्तवान् शूलपाणिः।

''मूल्यवत् वचनम् उक्तं भवता'' इति जामातुः प्रशंसां कृतवती मन्त्रवादिनी।

कमला शूलपाणिः च ततः प्रस्थितवन्तौ। मध्याह्नसमये तौ प्रयाणं स्थगयित्वा वृक्षस्य अधः उपविश्य मन्त्रवादिन्या दत्तं रोटिकाग्रन्थिम् उद्घाटितवन्तौ। तत्र एकं पत्रम् आसीत्। पत्रे एवं लिखितम् आसीत्–

''वत्स! मम पुत्र्याम् अनुरक्तः भवान् नागवेण्याः तत्पितुः च कथां कल्पयित्वा उक्त्वा मां वञ्चितवान्। एतत् मया न ज्ञातम् इति मा भावयतु। सर्वं ज्ञात्वा अपि अजानती इव मौनं स्थितवती अहम्। मम कुटीरस्य समीपे भवतः अटनं, मम पुत्र्या सह वार्तालापं च अहं ज्ञातवती एव। किन्तु भवतः परीक्षाम् अहं कर्तुम् इष्टवती। मम पुत्र्यां भवतः अनुरागः वास्तविकः वा न वा इति ज्ञातुम् इच्छन्ती अहं लोभजनकानि वस्तूनि दत्तवती। तदा अपि भवान् दृढतां प्रदर्शितवान्। अतः सन्तुष्टा अहं मम पुत्रीं दातुं सिद्धा जाता। भवतोः जीवनं सुखमयं भवतु इति आशीर्वादं करोमि। वर्षे एकवारं वा आगत्य मां भवन्तौ पश्यताम्। तावता अहं तृप्ता'' इति।

पत्रस्य विषयं ज्ञातवत्याः कमलायाः नेत्रे आर्द्रे जाते। अश्रूणि मार्जयन्ती सा उक्तवती– ''मम माता यद्यपि मन्त्रवादिनी, तथापि तस्याः हृदयं तु नितरां कोमलम्'' इति।



# यथा भावः तथा फलम्

वल्लभः कश्चन उत्कोचग्राही। कदाचित् उत्कोचस्वीकरणसमये एव सः अधिकारिभिः गृहीतः। राजा तं सेवासदनं प्रेषितवान्। सेवासदने मानसिकरोगिणः दीर्घकालिकरोगग्रस्ताः च भवन्ति स्म। एतादृशानां सेवायाम् अपराधिनः योजयति स्म राजा। एवं करणम् एव योग्यः दण्डः इति राज्ञः विचारः आसीत्।

कदाचित् प्रभुदासः नाम महात्मा सेवासदनम् आगतवान्। सप्ताहं यावत् तत्र स्थित्वा सः महता आदरेण तत्रत्यानां सेवां कृतवान्।

एतत्सर्वं दृष्ट्वा वल्लभः आश्चर्येण प्रभुदासं पृष्टवान्– "श्रीमन्! भवान् तु महात्मा। तथापि अत्र एवं रोगिणां सेवां करोति किल? एतेन खेदं न अनुभवति वा भवान्?" इति।

"मानवसेवा या क्रियते तदर्थं खेदः किमर्थम्? एषः तु अभिमानास्पदं विषयः" इति उक्तवान् प्रभुदासः।

तदा वल्लभः स्वस्य इतिवृत्तं निवेद्य– "अद्यपर्यन्तम् एतेन कार्येण अहं खेदम् अनुभवामि स्म। इतः परं तु अभिमानं प्राप्नोमि" इति उक्तवान्।

तदा प्रभुदासः उक्तवान्– "भोः, सेवाकार्येण भवान् खेदं प्राप्नोति उत अभिमानम् इति तु प्रमुखः विषयः न। कार्यं कुर्वतः भवतः पृष्ठभूमिका अत्र प्राधान्यम् आवहति। मानवसेवा करणीया इति भावनया भवान् कार्यं करोति चेत् अभिमानप्राप्तिः उचिता एव। दण्डरूपेण मया एतत् कार्यं क्रियते इति भावनया कार्यं क्रियते चेत् खेदप्राप्तिः एव उचिता। अतः प्रथमम् आत्मशोधनं करोतु" इति।

एतत् श्रुतवतः वल्लभस्य मनसि महत् परिवर्तनं जातम्। मानवसेवाभावनया सः तत्र कार्यं कर्तुम् आरम्भं कृतवान्। अतः तस्य व्यवहारे अपि सज्जनता स्फुटं दृश्यते स्म।





# अपूर्वस्य साहसगाथा

## १०

(अपूर्वः समीरं तन्मित्राणि च समुद्रचोरेभ्यः रक्षितवान्। अनन्तरं ते सर्वे निधेः अन्वेषणार्थं शिलाद्वीपं गतवन्तः। तत्र अल्पेन एव श्रमेण ते निधिं प्राप्तवन्तः। निधिं राज्ञे अर्पयित्वा समीरः उक्तवान् यत् निर्धनानां साहाय्यार्थम् एव एतस्य उपयोगः करणीयः इति। चोराणां शूलारोपणम् अपि न करणीयम् इति निवेदितवान् समीरः। राजा एतत् अङ्गीकृतवान्। तदनन्तरम्.....)

समुद्रचोराणां विचारणा प्रवृत्ता। ते अपराधानुगुणं दण्डनं प्राप्तवन्तः। समुद्रचोराः अन्ये लुण्ठाकाः च कारागारे स्थापिताः इत्यतः राज्ये चोरभीतिः न्यूना जाता। 'अपूर्वशक्तिमान् दिव्यपुरुषः सज्जनान् सरलजनान् च रक्षति' इति वार्ता सर्वत्र प्रसृता। अतः दुष्टप्रवृत्तिमत्सु सहजतया भीतिः उत्पन्ना। अतः तादृशानां कुकृत्यानि अपि न्यूनानि जातानि। धनिकानां दर्पः अपि क्षीणः जातः। कारागारे ये स्थापिताः ते मनःपरिर्तनं प्राप्य सन्मार्गगामिनः जाताः। एतस्य सर्वस्य कारणं समीरः इति राज्ञः विश्वासः। अतः तं मार्गदर्शकत्वेन नियोजितवान् राजा। कालः तु सुखेन गच्छति स्म।

मया कृतं दिव्यानन्दमुनिं निवेद्य सन्तोषः जनयितव्यः इति आलोच्य अपूर्वः हिमालयपर्वतं गतवान्। तत्र दिव्यानन्दमुनिः



यशस्वितया कर्तुं शक्ष्यति। मानवजातेः हितार्थं भवता बहुविधानि कार्याणि करणीयानि'' इति।

''श्रीमन्! मया तादृशानि एव कार्याणि एतावत्पर्यन्तम् अपि कृतानि। एवं स्थिते अपि भवान् उपदिशन् अस्ति- लोकोपकारकाणि कार्याणि करणीयानि इति। एवं तर्हि मया अनुसृते मार्गे कोऽपि दोषः सञ्जातः वा?'' इति विनयेन पृष्टवान् अपूर्वः।

''तथा किमपि नास्ति। भवता यानि कार्याणि कृतानि तानि सर्वाणि उचितानि एव। मम आशयं सम्यक् अवगत्य तदनुगुणं कार्यं कुर्वन् अस्ति। भवतः कार्यैः अहं नितरां सन्तृप्तः अस्मि। भवतः कार्येषु अल्पः अपि दोषः न घटितः'' इति उक्तवान् दिव्यानन्दमुनिः।

गुहायाम् उपविश्य ध्याने विलीनः आसीत्। गुहायाः बहिर्भागे उपविश्य स्वयं ध्याने निलीनः अभवत् अपूर्वः।

कदाचित् दिव्यानन्दमुनिः अपूर्वं स्वसमीपम् आहूय उक्तवान्– ''वत्स! अपूर्व! इतः पूर्वं बहवः ऋषिमुनयः योगबलेन ध्यानबलेन च अपूर्वाः शक्तीः सम्पादितवन्तः। तादृश्यः शक्तयः इदानीम् एव भवति सन्ति। अतः भवता पुनः ध्यानादिना सम्पादनीयं किमपि नास्ति। किन्तु भवता एव करणीयानि बहूनि अन्यानि कार्याणि सन्ति लोके। तादृशानां कार्याणां साधनार्थं मया सम्पादितां शक्तिम् अपि भवते दास्यामि। एतद्बलेन भवान् करणीयं कार्यं

''धन्योऽहं श्रीमन्, धन्योऽस्मि। इदानीं प्रायः सर्वेषु देशेषु राज्यभारनिर्वहणं न्याय्येन मार्गेण एव प्रचलति। कुत्रचित् अल्पाः समस्याः स्युः नाम। किन्तु ताः मानवैः स्वबुद्धिमत्तायाः साहाय्येन एव परिहर्तुं शक्याः। अतः तन्निमित्तं मया कोऽपि प्रयत्नः करणीयः नास्ति। एतादृशे सन्दर्भे अग्रे मया किं करणीयम् इति विषये मार्गदर्शनम् इच्छामि अहम्'' इति उक्तवान् अपूर्वः।

''वत्स! देशेषु इदानीं महासमस्या काऽपि न दृश्यते इति तु सत्यम् एव। किन्तु मानवानां मतिः सदा समाना न भवति। अल्पे एव काले

तत्र विकृतयः उत्पद्यन्ते। तादृशे स्थले भवता कार्यं करणीयम् अस्ति एव'' इति उक्तवान् दिव्यानन्दमुनिः।

''एवं तर्हि कस्मिंश्चित् देशे कस्यचित् मतौ विकृतिः उत्पन्ना अस्ति इति खलु भवतः आशयः? कुत्र तत्? विकृतमतिः कः सः?'' इति कुतूहलेन पृष्टवान् अपूर्वः।

''वत्स! एतावत्पर्यन्तं भवता चोराः लुण्ठाकाः इत्यादयः गृहीताः, तेषां मनसः परिवर्तनार्थं प्रयत्नः कृतः च। वस्तुतः तु एते दुष्टकार्ये निरताः आसन्, तथापि एतेषां व्यवहारे स्पष्टता आसीत्। ते यत् कुर्वन्ति स्म तत् सर्वे ज्ञातुं शक्नुवन्ति स्म। किन्तु लोके सर्वे एवं न भवन्ति। केचन तु एवं भवन्ति यत् ते गौरवार्हे पदे तिष्ठन्तः अपि स्वार्थादिसम्पादनार्थं गूढतया दुष्टकार्याणि चिन्तयन्ति। धनबलात् दर्पात् वा कार्यं साधयितुं प्रयतन्ते ते। किन्तु एतादृशैः यत् क्रियते तेन समाजस्य महत् अहितं सिध्यति। एतादृशानां कुकार्याणि झटिति दृष्टिगोचराणि न भवन्ति। एषः एव क्लेशः'' इति सखेदम् उक्तवान् दिव्यानन्दमुनिः।

''श्रीमन्! एतादृशं कुकृत्यं कुत्र प्रचलति? तस्य पृष्ठभूमिकायां स्थितः दुष्टः सः कः? तेन किं क्रियमाणम् अस्ति?'' इति उद्वेगेन पृष्टवान् अपूर्वः।

''तत्सर्वं भवता अन्वेष्टव्यम्। कदाचित् अहं मानवकुलस्य हितं चिन्तयन्



ध्याननिमग्नः आसम्। तदा मया दिव्यदृष्ट्या द्वौ दुष्टौ दृष्टौ। तौ अपवित्रं किञ्चन कार्यं चिन्तयन्तौ स्तः इति एतावत् मया ज्ञातम्। तयोः अन्यतरम् अहं जानामि। सः रुद्रपुर्याः प्रधानमन्त्री। श्वः रात्रौ तौ पुनरपि मिलित्वा समालोचनं कुरुतः इति अपि ज्ञातं मया। किन्तु तयोः उद्देशः कः, कः मार्गः अनुस्रियते इत्यादिकम् अहं न जानामि। भवान् रुद्रपुरीं गत्वा परिस्थितिं समालोच्य दुष्टमन्त्रिणः कुतन्त्रं विफलीकरोतु'' इति उक्तवान् मुनिः दिव्यानन्दः। अनन्तरम् अन्यस्य मनसः ज्ञाने उपकारिकां विद्याम् अपूर्वम् उपदिश्य आशिषा अनुगृह्य तं ततः प्रेषितवान्।

* * * *



राजभवनस्य पुरतः महान् सम्भ्रमः उत्साहः च। राजोद्योगिनः परस्परं कार्यम् आदिशन्तः वेगेन इतस्ततः सञ्चरन्ति। जनाः अपि महता उत्साहेन सन्ति।

राजधानीम् ऐदम्प्राथम्येन आगतः कश्चित् अन्यं पृष्टवान्– "किं प्रवर्तते अत्र? कः विशेषः?" इति।

"अस्माकं राजकुमारी कृष्णकुमारी मातुलस्य जयवर्मणः गृहात् लावण्यपुरात् प्रत्यागच्छन्ती अस्ति। षड्भ्यः मासेभ्यः पूर्वं सा इतः गतवती आसीत्। तस्याः स्वागतार्थम् एवं जनाः सम्मिलिताः सन्ति" इति उक्तवान् कश्चन राजोद्योगी।

पुनः अल्पे एव काले गजस्य उपरि स्थापिते सुमनोहरतया अलङ्कृते वरण्डके उपविष्टा राजकुमारी कृष्णकुमारी राजभवनसमीपम् आगतवती। तस्याः उपरि सुवर्णच्छत्रं राजते स्म। तस्याः पुरतः पृष्ठतः च अन्यगजयोः उपरि सहचर्यः उपविष्टवत्यः आसन्। गजम् उभयतः रक्षकभटाः गच्छन्तः आसन्।

गजस्य उपरि उपविष्टाः सहचर्यः प्रथमं गजात् अवतीर्य राजकुमार्याः समीपं गतवत्यः। भटाः सम्भ्रमेण आगत्य गजस्य पार्श्वे उन्नतं मृदुलम् आसनं स्थापितवन्तः। हस्तिपकस्य सूचनायाः अनुगुणं राजकुमारी किञ्चित् अवनम्य मृदुलासनस्य उपरि पदं स्थापितवती। ततः भूमिं प्राप्तवती। भूमौ अपि मृदुलाः वस्त्रकटाः प्रसारिताः आसन्।

"आगच्छतु वत्से!" इति उक्त्वा तां प्रीत्या आलिङ्ग्य हस्तं गृहीत्वा अग्रे प्रस्थितवान् विश्ववर्मा।

रुद्रपुर्याः राज्ञः विश्ववर्मणः एकमात्रपुत्री कृष्णकुमारी। बाल्ये एव तया मातृवियोगः प्राप्तः आसीत्। राजा विश्ववर्मा अन्यस्याः विवाहे उत्साहं न प्रदर्शितवान् आसीत्। रुद्रपुर्याः प्रतिवेशिराज्यं लावण्यपुरम्। तस्य राजा च जयवर्मा। सः कृष्णकुमार्याः मातुलः। अनपत्यः सः कृष्णकुमारीम् एव पुत्रीं भावयति स्म। भगिन्याः मरणस्य अनन्तरं तु भगिनीपुत्र्यां कृष्णकुमार्यां विशेषप्रीतिः जयवर्मणः। स्वराज्यं कृष्णकुमार्यै एव दातुं सङ्कल्पितवान् आसीत् जयवर्मा। एवं

राज्यद्वयस्य उत्तराधिकारिणी आसीत् कृष्णकुमारी। पितुः मातुलस्य च सन्तोषार्थं सा षण्मासान् एकैकत्र वसति स्म। अतः प्रतिषण्मासे एकवारं रुद्रपुर्यां लावण्यपुरे च राजकुमार्याः स्वागतनिमित्तम् उत्सवः आचर्यते स्म।

युवराज्ञ्याः कण्ठे सुवर्णहाराणां मध्ये कश्चन विशिष्टः मणिहारः सुशोभते स्म। अपूर्वम् एतं हारं दृष्ट्वा आश्चर्येण पुत्रीं पृष्टवान् विश्ववर्मा– "कुतः एतत्?" इति।

"अपूर्वः एषः मणिहारः मातुलेन मम निमित्तं कारितः" इति साभिमानम् उक्तवती युवराज्ञी।

मणिहारं हस्तेन स्पृष्ट्वा पुनः पुनः परीक्ष्य– "पूर्वं केनापि महात्मना अतुलशक्तिशाली चन्द्रकान्तमणिः दत्तः इति मया श्रुतम् आसीत्। सः एव मणिः एषः न स्यात् खलु?" इति पृष्टवान् राजा।

"भवता उक्तः मणिः एषः एव। बहोः कालतः एषः मणिः धनागारे एव आसीत्। उभयोः देशयोः शान्तिसौभाग्यार्थं समृद्ध्यर्थं च मातुलः तं मणिं हारे नियोज्य मह्यं दत्तवान्। मातुलस्य प्रीतेः द्योतकः एषः हारः कथम् अस्ति?" इति पृष्टवती कृष्णकुमारी।

"नितरां शोभते। रत्नं रत्नेन सङ्गतम् अस्ति" इति प्रीत्यतिशयेन पुत्रीम् उक्तवान् विश्ववर्मा।

* * * *



"एतावत्पर्यन्तं कुत्रापि कोणे सुप्ता सौभाग्यलक्ष्मीः इदानीं भवतः समीपे आगता अस्ति। इतः परं पाणिग्रहणमात्रम् अवशिष्टम्" इति उक्तवान् मान्त्रिकः– पुरतः स्थितं प्रधानमन्त्रिणं पश्यन्।

प्रधानमन्त्री एतत् अङ्गीकुर्वन् सन्तोषेण मन्दहासपूर्वकं शिरः चालितवान्।

"किन्तु भवता एतत् तु अवश्यं ज्ञातव्यं यत् एषा अदृष्टलक्ष्मीः भवत्समीपं स्वयं न आगता इति। तस्याः जागरणार्थं मया उपायः आश्रितः। मन्त्रबलस्य प्रयोगः कृतः। अतः एव राज्ञः जयवर्मणः हृदये परिवर्तनम् आगतम्। चिरकालात् धनागारे स्थापितं चन्द्रकान्तमणिं हारे संयोज्य पुत्र्याः कण्ठे



स्थापितवान् सः" इति साभिमानम् उक्त्वा अङ्गुलीभिः श्मश्रु स्पृष्टवान् मान्त्रिकः।

"भवतः सामर्थ्यम् अपूर्वम् एव। अतः कार्यसिद्धौ सन्देहः एव नास्ति मम" इति उक्तवान् प्रधानमन्त्री।

"अहो दौर्भाग्यम्! चोरः गुरुः चण्डालः शिष्यः!" इति निलीय स्थितः अपूर्वः स्वगतम् उक्तवान्।

"जयवर्मा विश्ववर्मा वा चन्द्रकान्तमणेः महत्त्वं न जानीतः यत् तत् तु अस्माकं महत् सौभाग्यम्। अमूल्यः मणिः इति एतावत् एव जानीतः तौ। मणेः अन्यानि वैशिष्ट्यानि तौ सर्वथा न जानीतः। मूर्खौ तौ!" इति उक्त्वा उच्चैः हसितुम् उद्युक्तः मान्त्रिकः बलात् मुखं पिधाय हासं निगृह्य मौनम् आश्रितवान्।

"किमर्थं श्रीमन्! किम् अभवत्?" इति आश्चर्येण पृष्टवान् प्रधानमन्त्री।

"इदानीं किमपि न जातम्। किन्तु कदाचित् भित्तयः अपि कर्णवत्यः भवन्ति खलु? अतः जागरूकता आश्रयणीया" इति मन्दस्वरेण उक्तवान् मान्त्रिकः।

'अहो दुष्टता! मानवानां मनस्सु कीदृशाः विकाराः जायन्ते इति कोऽपि न जानाति इति गुरुणा यत् उक्तं तत् युक्तम् एव। गुरुणा या अन्यमनोज्ञानसाहाय्यिका शक्तिः दत्ता सा तु महते उपयोगाय अभवत्। एतयोः चिन्तनम् आमूलाग्रं ज्ञात्वा योजनां विफलीकरिष्यामि' इति स्वगतम् उक्तवान् अपूर्वः।

मान्त्रिकः प्रधानमन्त्री च सुदीर्घकालं यावत् गभीरं समालोचनं कृतवन्तौ। स्वशक्त्यतिशयेन तयोः चिन्तनं समग्रं ज्ञातवान् अपूर्वः।

मान्त्रिकः प्रधानमन्त्री च अभिन्ने गुरुकुले पठितवन्तौ आस्ताम्। तयोः गुरोः गुरुः अपूर्वं चन्द्रकान्तमणिं जयवर्मणः पूर्वजेभ्यः दत्तवान् आसीत्। जयवर्मवंशीयाः तं मणिं धनागारे सुरक्षितं स्थापितवन्तः आसन्। गुरुमुखात् मणेः विषयः ताभ्यां ज्ञातः आसीत्।

कदाचित् मान्त्रिकः तालग्रन्थं पठन् तत्र उल्लिखितं चन्द्रकान्तमणिरहस्यं ज्ञातवान् आसीत्। 'चन्द्रकान्तमणिं धृत्वा यः विशिष्टक्रमेण पूजां करोति सः चक्रवर्ती

भविष्यति' इति तत्र उल्लिखितम् आसीत्। एतत् ज्ञात्वा सन्तुष्टः मान्त्रिकः केनापि उपायेन मणेः वशीकरणं करणीयम् इति सङ्कल्पितवान्। अतः सः जयवर्मणः समीपं गत्वा मधुरैः वचनैः तं वशीकृत्य ध्यानजपादिकम् अभिनीय कोषागारस्थः मणिः मया मन्त्रबलेन ज्ञातः इति उक्त्वा राजानम् उक्तवान्– "युवराज्ञी कृष्णकुमारी दुष्टशक्त्या आविष्टा अस्ति। अतः चन्द्रकान्तमणियुक्तः हारः तया धरणीयः। तदा राज्यस्य अपि हितम्" इति।

भागिनेय्याः हितम् इच्छन् जयवर्मा अचिरात् एव चन्द्रकान्तमणियुक्तं हारं कारयित्वा कृष्णकुमार्यै दत्तवान्। 'मातुलः प्रीत्या एतं हारं मह्यं दत्तवान्' इति चिन्तितवती कृष्णकुमारी।

'मया मन्त्रप्रयोगबलतः जयवर्मणः मनसि परिवर्तनम् आनीतम्। अतः एव राजा तन्मणियुक्तं हारं कृष्णकुमार्यै दातुं सिद्धः जातः' इति मिथ्यावचनम् उक्तवान् मान्त्रिकः। मन्त्री अत्र विश्वसितवान्। 'मन्त्रज्ञस्य एतस्य मान्त्रिकस्य साहाय्येन अहं चक्रवर्ती भविष्यामि' इति चिन्तयन् अस्ति प्रधानमन्त्री।

'पूजाव्याजेन चन्द्रकान्तमणिं हस्ते स्वीकृत्य उपायेन स्वायत्तीकरणीयम्' इति योजनां कृतवान् अस्ति मान्त्रिकः। मान्त्रिकस्य कुतन्त्रं सर्वथा न जानाति प्रधानमन्त्री। 'महाविरक्ते मान्त्रिके लोभः नास्ति' इति चिन्तयति सः।

दर्शनमात्रेण कस्य स्वभावः कीदृशः इति ज्ञातुं सामर्थ्यम् अस्ति अपूर्वस्य। प्रधानमन्त्री स्वभावेन मूर्खः, न तु मान्त्रिकवत् दुष्टः। किन्तु मूर्खताकारणतः सः तादृशान् अपि आदरेण पश्यति स्म, ये च दुष्टाः सन्तः अपि साहाय्यं कुर्वन्ति। 'एतादृशः अविवेकी यदि चक्रवर्ती भवेत् तर्हि लोकस्य स्थितिः शोचनीया स्यात्। अतः एव मम गुरुः एतस्य निग्रहणार्थं मां नियोजितवान् अस्ति' इति आलोचितवान् अपूर्वः। – (अनुवर्तते)






# शापप्रतिस्वीकरणम्

त्रिविक्रमस्य मुखात् वचनस्य निस्सारणार्थम् अद्य का कथा वक्तव्या इति चिन्तयन्तं स्थितम् इव वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च।

तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् असामान्यः पुरुषः इत्यत्र सन्देहः नास्ति मम। यतः सामान्यः चेत् एतावता एव प्रयत्नात् विरतः अभविष्यत्। भवन्तम् एतादृशे कार्ये नियोजितवान् सः गुरुः कः? किं सः पक्षपातेन भवन्तं न वञ्चयेत्? यतः गुरवः सदा गुणान् सामर्थ्यं वा पुरस्कुर्वन्ति इति न। शिष्यवात्सल्यवशात् ते असमर्थम् अपि पुरस्कर्तुम् अर्हन्ति। पूर्वं लोकमित्रनामकेन मुनिना तथैव कृतम्।

## वेतालकथा



भवतः मार्गायासस्य परिहारार्थं तदीयां कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं लोकमित्रः नाम मुनिः कस्मिंश्चित् अरण्ये आश्रमं निर्माय तपः आचरन् आसीत्। बहवः तस्य शिष्यत्वम् अङ्गीकृत्य तपश्चरणम् अभ्यस्यन्ति स्म। लोकमित्रः तु सर्वान् शिष्यान् समानया भावनया पश्यन् तपस्स्वरूपम्, आचरणक्रमं, विधिनिषेधान्, च सम्यक् बोधयति स्म।

लोकमित्रस्य शिष्येषु अन्यतमौ देवप्रियः शक्तिकुमारः च तपसा बह्वीः शक्तीः सम्पाद्य ज्येष्ठत्वं गुरुप्रीतिं च सम्पादितवन्तौ आस्ताम्।

कदाचित् मुनिः लोकमित्रः देवप्रियं शक्तिकुमारं च स्वसमीपम् आहूय उक्तवान्— ''वत्सौ! मत्तः यद्यत् प्राप्तव्यं तत्सर्वं प्राप्तं भवद्भ्याम्। भवन्तौ उत्तमगुणशालिनौ अपि। इतः परम् अभिलषितं कार्यं कुर्वन्तौ जीवने धन्यतां सम्पादयताम्। वार्धक्ये पुनरपि तपश्चरणार्थम् अत्र आगन्तुम् अर्हतः। मोक्षप्राप्तिनिमित्तं तपः कर्तुं भवतोः न एषः कालः'' इति।

गुरोः वचनम् अङ्गीकृतवन्तौ तौ। क्षणकालस्य अनन्तरं शक्तिकुमारः गुरुम् उक्तवान्— ''गुरुवर्य! तपश्शक्त्या आवाभ्याम् अपूर्वा शक्तिः सम्पादिता, सत्यम्। शापदानसामर्थ्यम् अपि अस्ति आवयोः। किन्तु शापप्रतिस्वीकारतन्त्रम् आवां न जानीवः। यदि कदाचित् आवयोः अन्यतरेण कस्मैचित् शापः दीयेत तर्हि प्रतिस्वीकरणेच्छायां सत्याम् अपि किमपि कर्तुं न शक्येत। तदा च जनाः पीडिताः भवेयुः। अतः मम प्रार्थना यत् शापप्रतिसङ्ग्रहणोपायः अपि बोधनीयः इति'' इति।

''ममापि इच्छा तथैव श्रीमन्!'' इति उक्तवान् देवप्रियः।

''शापप्रतिसङ्ग्रहणोपायः ज्ञातव्यः चेत् इतोऽपि मासद्वयं यावत् अत्र स्थातव्यम्'' इति

उक्तवान् लोकमित्रः। शिष्यौ एतत् अङ्गीकृतवन्तौ। सप्ताहस्य अनन्तरं लोकमित्रः शक्तिकुमारम् उक्तवान्– "वत्स! शापप्रतिसङ्ग्रहणार्थं सामर्थ्यं प्राप्तव्यं चेत् भवता कठिनः उपासनामार्गः अनुसरणीयः। भवान् एतत् इच्छति वा?" इति।

"अवश्यम् इच्छामि" इति गुरुम् उक्त्वा शक्तिकुमारः सन्तोषेण उपासनां कर्तुम् उद्युक्तः अभवत्।

तस्मिन् एव काले लोकमित्रः देवप्रियम् आहूय– "वत्स! तत्तस्य योग्यतां दृष्ट्वा अहं विद्यादानं करोमि। शापप्रतिसङ्ग्रहणमार्गं भवन्तं न उपदिशामि। अतः जीवने जागरूकतया व्यवहरतु। शापदानप्रसङ्गं कदापि मा सृजतु। सफलं जीवनं भवतु भवतः" इति उक्त्वा आशिषा अनुगृह्य तं ततः प्रेषितवान्।

शक्तिकुमारः गुरुणा उपदिष्टेन क्रमेण उपासनां यशस्वितया समाप्य शापप्रतिसङ्ग्रहणमार्गं ज्ञात्वा गुरोः अनुज्ञां प्राप्य सन्तोषेण ततः निर्गतवान्।

ततः पञ्चषाणि वर्षाणि अतीतानि। कदाचित् तद्देशस्य राजा मान्यसेनः दूतं सम्प्रेष्य लोकमित्रम् आस्थानं प्रति आनायितवान्।

राजा समर्थस्य कस्यचित् राजगुरोः अन्वेषणं कुर्वन् आसीत्। तदर्थम् अर्हौ शक्तिकुमारः देवप्रियश्च एव इति तेन ज्ञातम् आसीत्। किन्तु तयोः व्यवहारे भेदः स्फुटं





दृश्यते स्म।

शक्तिकुमारस्य प्रभावः समग्रे देशे प्रसृतः आसीत्। सः शापदानसमर्थः इति देशे सर्वे जानन्ति स्म। अतः तस्य शापस्य भयात् दुर्मार्गगामिनः बहवः मौनं स्थितवन्तः आसन्। शक्तिकुमारस्य शिष्याः अपि बहवः। ते सेनारूपेण सङ्घटिताः सन्तः दुर्मार्गगामिनां निग्रहं कुर्वन्ति स्म। यदि एतस्याः सेनायाः विरोधः क्रियेत तर्हि शक्तिकुमारः शापं दद्यात् इति भीतिः जनानाम्। अतः कोऽपि शक्तिसेनायाः विरोधं सम्पादयितुं न इच्छति स्म।

देवप्रियस्य प्रसिद्धिः न तथा अधिका। तस्य शिष्याणां सङ्ख्या अपि न्यूना। सः देशसञ्चारं कुर्वन् जनान् सन्मार्गम् उपदिशति स्म। कथाः उदाहरन् जनानां मनस्सु नीतिं दृढम् उपस्थापयति स्म। जनाः तम् आदरेण पश्यन्ति स्म। तस्मिन् अपूर्वा शक्तिः काचित् अस्ति इति कोऽपि न जानाति स्म।

'एवं शक्तिकुमार-देवप्रिययोः उभयोः अपि विशिष्टं सामर्थ्यम् अस्ति। तथापि शक्तिकुमारः एव राजगुरुः भवति चेत् वरम्' इति राज्ञः मान्यसेनस्य आशयः।

शक्तिकुमारः राज्ञः आशयं ज्ञात्वा उक्तवान्– "राजन्! देवप्रियस्य मम च सामर्थ्यं समानम्। तथापि राजगुरुपदं प्राप्तुं कः अर्हः इति अस्माकं गुरुः एव निर्णयेत्। सः यथा वदति तथा आचरामः वयम्। तस्य वचनं मान्यम् आवयोः। तस्य अनुज्ञां विना एतत् पदं न अङ्गीक्रियते आवाभ्याम्। अतः एतद्विषये तस्य आशयः कः इति प्रथमं जानातु" इति।

मान्यसेनः लोकमित्रं सर्वं निवेद्य– "एतयोः कतरः राजगुरुः भवितुम् अर्हः?" इति पृष्टवान्। तदा लोकमित्रः उक्तवान्– "मम शिष्यौ उभौ अपि यद्यपि सामर्थ्येन समानौ, तथापि राजगुरुपदं देवप्रियः अलङ्करोति चेदेव वरम् इति मम अभिप्रायः" इति।

राजा मान्यसेनः लोकमित्रस्य आशयं पुरस्कुर्वन् देवप्रियं राजगुरुपदे नियोजितवान्।

वेतालः एवं कथां समाप्य अवदत्–

"राजन्! लोकमित्रः पक्षपातभावं विना व्यवहृतवान् इति भावयति वा भवान्? शापप्रतिग्रहणसामर्थ्यं शक्तिकुमाराय दातुं सिद्धः लोकमित्रः देवप्रियाय तां शक्तिं न दत्तवान्। अत्र पक्षपातः स्फुटः किल? किन्तु राजगुरुपदविषये तेन देवप्रियप्रियता प्रदर्शिता। एतत् किमर्थम्? पूर्वं देवप्रियविषये यत् अनुचितं कृतं तत् समीकर्तुम् एवं कृतवान् वा सः? अथवा देवप्रियः राजगुरुपदम् अलङ्करिष्यति चेत् गुरुदर्पं प्रदर्शयन् धनं प्राप्तुं शक्नोमि इति चिन्तितवान् वा सः? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "लोकमित्रः कश्चन सज्जनः मुनिः। पक्षपातादिकं तेन न प्रदर्शितम्। शापप्रतिसङ्ग्रहसामर्थ्यं यस्य अस्ति सः श्रेष्ठः इति न। वस्तुतः तादृशं सामर्थ्यं यस्य, तस्य योग्यता न्यूना एव। यः कोपादिवशीभूतः सन् शापं ददाति तस्य निमित्तम् एव खलु आवश्यकं शापप्रतिस्वीकरणसामर्थ्यम्? यः आत्मनः कोपादीन् निवार्य सात्त्विकगुणानां प्राबल्यं प्राप्नोति सः शापं दातुम् उद्युक्तः एव न भवति। यस्य जीवने शापदानप्रसङ्गः एव न आगच्छेत् तस्मै प्रतिस्वीकरणसामर्थ्यं किमर्थम्? न आवश्यकं खलु? अतः एव लोकमित्रः शक्तिकुमाराय तादृशं सामर्थ्यं दत्तवान्, न तु देवप्रियाय। एतेन देवप्रियस्य सात्त्विकता श्रेष्ठता च ज्ञायते। एतान् गुणान् एव मनसि निधाय लोकमित्रः उक्तवान् यत् देवप्रियः एव राजगुरुपदम् अलङ्कर्तुम् अर्हः इति। एवं सन्दर्भद्वये अपि विचिन्त्य एव व्यवहृतं लोकमित्रेण। पक्षपातः तु कदापि न प्रदर्शितः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# हेषारवफलम्

कारुण्यपुरे पूर्वं सोमसुन्दरः नाम कृषिकः आसीत्। तस्य पुत्रः कृष्णकुमारः। मातापितृभ्यां प्रीत्या लालितः सः युवकः जातः चेदपि कृषिकार्ये आसक्तिं न प्रदर्शयति स्म। ग्रामे इतस्ततः अटन् वृथा समयं यापयति स्म।

सोमसुन्दरः युवकं पुत्रं तदा तदा कार्याणि वदति स्म। किन्तु कृष्णकुमारः आलस्यं प्रदर्शयन् तानि न करोति स्म। अतः खिन्नः सोमसुन्दरः कदाचित् पुत्रम् उक्तवान्– "वत्स कृष्ण! भवान् गृहकार्येषु अनासक्तिं प्रदर्शयन् वृथा अटति। एवं चेत् अग्रे भवतः जीवनस्य का गतिः? आयमार्गः कोऽपि चिन्तनीयः खलु भवता?" इति।

तदा कोपेन उक्तवान् कृष्णकुमारः– "इदानीं मया किं करणीयम् इति वदति भवान्?" इति।

"सस्यकर्तनकालः आसन्नः अस्ति। अतः क्षेत्रस्य रक्षणं वा करोतु। अत्र तु कौशलं किमपि न आवश्यकम्।" इति उक्तवान् सोमसुन्दरः।

"अस्तु तावत्" इति उक्त्वा क्षेत्ररक्षणार्थं निर्गतवान् कृष्णकुमारः। अल्पे एव काले तेन तत्र नीरसता अनुभूता। अनन्यगतिकः सः तत्र उड्डयमानानां पक्षिणाम्, तत्प्रदेशे सञ्चरतां पशूनां च ध्वनिम् अनुकर्तुम् उद्युक्तः। एवम् अनुकरणे तस्य रुचिः उत्पन्ना। परमया श्रद्धया सः जन्तूनां ध्वनिम् अनुकृतवान्। अतः अल्पे एव काले सः अनुकरणप्रवीणः जातः। सः यदा ध्वनिं करोति तदा तज्जातीयाः पक्षिणः पशवः वा प्रतिक्रियारूपेण स्वयम् अपि ध्वनिं कुर्वन्ति स्म।

इदानीं क्षेत्ररक्षणकार्ये नीरसतां न अनुभवति कृष्णकुमारः। तस्य ध्वन्यनुकरणसामर्थ्यं जानन्तः अन्यक्षेत्र-रक्षकाः तत्समीपम् आगत्य

अनुकरणकलायाः अभ्यासं कर्तुम् आरब्धवन्तः। अतः सन्तोषेण एव कृष्णकुमारस्य कालः गच्छति।

कारुण्यपुरं गौतमपुरस्य भूस्वामिनः अधीनम् आसीत्। अश्वप्रयाणं भूस्वामिनः प्रियं कार्यम्। सः नवरात्रोत्सवसन्दर्भे प्रतिवर्षं प्राचीनम् अश्वं कस्मैचित् दत्त्वा नूतनम् अश्वम् आरुह्य स्वाधीनेषु ग्रामेषु सञ्चरन् कृषिकाणां योगक्षेमं विचारयति स्म। एषा प्रातिवार्षिकी पद्धतिः।

एतस्मिन् वर्षे अपि भूस्वामी नूतनम् अश्वम् आरुह्य ग्रामात् ग्रामं प्रस्थितवान्। एतस्मिन् वर्षे स्वीकृतः अश्वः सुन्दरः आसीत्, उद्धतः अपि। स्वस्य उपरि अन्यस्य उपवेशनं न इच्छति स्म सः।

भूस्वामी अश्वनिग्रहणे निपुणः एव खलु? अतः धैर्येण प्रयाणम् आरब्धवान् सः। अश्वः निरन्तरं गच्छति। कुत्रापि न तिष्ठति। अश्वस्य स्थगनार्थं भूस्वामी बहुधा प्रयत्नं करोति। किन्तु सर्वथा असफलः सः।

ग्रामीणाः अपि अश्वं निरोद्धुम् इच्छन्तः मध्ये मार्गं स्थित्वा अवरोधं कृतवन्तः। किन्तु अश्वः तान् पातयित्वा गच्छन् कारुण्यपुरम् अपि प्राप्नोत्। तत्रापि जनाः अश्वस्य स्थगनार्थं प्रयत्नं कृतवन्तः। तान् पातयित्वा अश्वः अग्रे अधावत्।

पतनभीत्या कम्पमानः भूस्वामी अश्वस्य केसरान् दृढं गृहीत्वा "अये, तिष्ठतु" इति अश्वं वदन् "भो भोः, अश्वं स्थगयन्तु" इति जनान् उद्दिश्य उच्चैः वदति स्म। अश्वः तु



धावन् एव अस्ति।

भूस्वामिनः शोचनीया दशा कृष्णकुमारेण अपि दूरात् दृष्टा। सः झटिति मार्गपार्श्वे स्थितस्य गुल्मस्य पृष्ठतः स्थित्वा हेषारवं कृतवान्। एषः वास्तविकः हेषारवः इति मत्वा भूस्वामिनः अश्वः गुल्मसमीपे अतिष्ठत्। स्वयम् अपि हेषारवम् अकरोत्।

"देवो दयालुः" इति वदन् झटिति अश्वात् अवतीर्य हस्तच्युतं खलीनं स्वहस्ते गृहीत्वा समाधानेन निःश्वसन् 'अन्यः अश्वः कुत्र?' इति परितः दृष्टवान् भूस्वामी। तावता ग्रामीणाः तत्र आगताः। कृष्णकुमारः अपि गुल्ममध्यतः बहिः आगतवान्।

कृष्णकुमारम् आश्चर्येण पश्यति भूस्वामी। तावता तत्र उपस्थितः सोमसुन्दरः भूस्वामिनः पादौ गृहीत्वा क्षमां प्रार्थितवान्– "श्रीमन्! अविवेकी मम पुत्रः अज्ञानवशात् भवतः अश्वस्य उपहासं कृतवान्। क्षन्तव्याः वयम्" इति।

तदा भूस्वामी सोमसुन्दरम् उत्थाप्य– "एवं हेषारवं कृतवान् भवतः पुत्रः वा? तस्य हेषारवः तावत् सहजः आसीत् यत् मम उद्धतः अश्वः अपि तेन ध्वनिना वशीकृतः सन् स्वयम् अतिष्ठत्। अतः भवतः पुत्रेण अपराधः कोऽपि न कृतः, प्रत्युत उपकारः एव कृतः। मम प्राणाः रक्षिताः तेन। एतेन अहं नितरां सन्तुष्टः अस्मि। इतः आरभ्य कासारपर्यन्ता भूमिः मया एतस्मै दीयते। अद्य आरभ्य एतस्याः भूमेः स्वामी एषः एव। वत्स! आगच्छतु अत्र। अपूर्वा विद्या सम्पादिता भवता। अद्य यथा मम प्राणान् रक्षता भवता उपकारः कृतः तथा अग्रे अपि सर्वेषाम् उपकारं करोतु। परोपकारः भवतः जीवनस्य लक्ष्यं भवतु" इति उक्तवान्।

एतावत् उक्त्वा अग्रे गतवान् भूस्वामी। भूस्वामिनः वचनेन नितरां प्रभावितः अभवत् कृष्णकुमारः। तदीयम् आलस्यम् अपगतम्। कार्ये श्रद्धा उत्पन्ना। जनानां कष्टसुखादिकं सदा पृच्छन् कष्टनिवारणार्थं साहाय्यं कुर्वन् सः जनप्रियः जातः।






भारतीयाः देवताः

# भगवान् बुद्धः

उत्तरप्रदेश-नेपालयोः सीमाप्रदेशे कपिलवस्तुनामकः प्रदेशः अस्ति। अत्रैव पूर्वं राजकुमारस्य गौतमस्य जन्म जातम् आसीत्। किन्तु सः भोगमयं राजजीवनं कौटुम्बिकं सुख-सम्पदं च परित्यज्य तपसः निमित्तम्अरण्यं गतवान्। बहूनां वर्षाणां तपसा तेन तत्त्वस्य ज्ञानं प्राप्तम्। एवं ज्ञानोदयं– बुद्धत्वं – प्राप्य सः गौतमबुद्धः जातः। भगवान् बुद्धः इत्यपि जनाः तं वदन्ति। क्रि.पू. ५६६ तः क्रि.पू. ४८६ पर्यन्तं, तन्नाम ८० वर्षाणि यावत्, जीवितवान् गौतमबुद्धः।

तेन उक्तम्– 'मनुष्याणां दुःखस्य मूलं कारणं विविधाः कामनाः एव। कामनाः निगृहीताः जिताः च चेत् दुःखानि निर्मूलितानि भवन्ति, तद्द्वारा च जन्म-मृत्युरूपायाः शृङ्खलातः विमोचनं प्राप्यते' इति।

भगवतः बुद्धस्य उपदेशाः समग्रे जगति प्रसिद्धाः सन्ति। भगवतः विष्णोः दशसु अवतारेषु बुद्धावतारः अपि अन्यतमः इति भाव्यते। इदानीं प्रपञ्चे १/३ जनाः बौद्धमतानुयायिनः सन्ति।

वार्ताविषया: बालका:–

# अत्यल्पवयस्क: भारतीयक्रीडापटु:

कलकत्तानगरीया: नागरिका: गते जुलैमासे अत्यल्पवयस्कस्य क्रीडापटो: निमित्तं स्वागतसमारम्भं कृतवन्त:। क: स: क्रीडापटु:?

स च अस्ति सूर्यशेखर: गङ्गूली। एष: हालेण्ड्देशस्य वार्सानगरे प्रवृत्तायां विश्वस्तरीय-कनीय-चतुरङ्गस्पर्धायां (वर्ल्ड् सब्जूनियर् चेस् चाम्पियन्शिप्) कांस्यपदकं प्राप्तवान् अस्ति। एतेन तस्यां स्पर्धायाम् एकादशावृत्तिषु अष्ट (८) अङ्का: प्राप्ता: आसन्। सुवर्णपदकं च लेरास् याण्ड्रिया नामकेन प्राप्तं, यश्च प्रान्सुदेशीय:, येन च ८.५ अङ्का: सम्पादिता:। रजतपदकं प्राप्तवता पाको वालेकानामकेन अपि सूर्यशेखरेण इव ८ एव अङ्का: प्राप्ता: आसन्। किन्तु तेन स्पर्धायां क्रमबद्धा प्रगति: प्रदर्शिता आसीत्।

स्पर्धाया: द्वितीये दिने विश्वविख्यात: चतुरङ्गपटु: ग्यारी कास्परोव् सूर्यशेखरस्य पार्श्वे एव स्थित्वा तदीयं क्रीडनक्रमं परिशीलयन् आसीत्। यदा सूर्यशेखर: षोडश्याम् आवृत्तौ प्रतिस्पर्धिनं पराजितवान् तदा कास्परोव्वर्यस्य शिक्षक: एड्डीगुफेल्ड् सूर्यशेखरविषये उक्तवान् यत् एष: दश-द्वादशासु वर्षेसु विश्वविख्यात: चतुरङ्गपटु: भविष्यति इति।




सूर्यशेखर: स्काटिष् चर्च् कलेजियेट् विद्यालये तृतीयकक्ष्यायां पठति। एतस्य पिता पङ्कज गङ्गूली वृत्त्या ज्योतिषिक:। 'ताराबलकारणत: मम पुत्र: चतुरङ्गक्रीडायां विजयी जात:' इति विश्वसिति स:।

सूर्यशेखरस्य मातु: नाम आरती इति। मातु: वंशे बहव: चतुरङ्गपटव: सन्ति। मातामह: अनिलबसुमल्लिक् सूर्यशेखरे चतुरङ्गक्रीडासक्तिम् उत्पादितवान्, यदा च सूर्यशेखर: त्रिवर्षीय: आसीत्। पञ्चवर्षीय: सूर्यशेखर: सर्वप्रथमं स्पर्धायां भागं गृहीतवान्। एतावता तेन २७ राष्ट्रियस्पर्धासु, ३७ राज्यस्तरीयस्पर्धासु, अन्ताराष्ट्रियस्पर्धाद्वये च भाग: गृहीत:।

४.२ द्वादशाङ्गुलोन्नतस्य एतस्य सूर्यशेखरस्य पादकन्दुकक्रीडायां क्रिकेट्क्रीडायां चापि अत्यासक्ति:। सर्वासु क्रीडासु एतस्य सामान्या आसक्ति: अस्ति एव। तस्य स्मरणशक्ति: अपि अपूर्वा एव। 'गणकयन्त्रसदृश: एष:' इति परिशीलका: वदन्ति।

भारतीययो: विश्वस्तरीयकनीयक्रीडापट्वो: दिव्येन्द्र बरुवा (१९७८) विश्वनाथ आनन्द (१९८७) इत्येतयो: योग्य: उत्तराधिकारी सूर्यशेखर: भवेत् इति भाव्यते।

# भवन्तः जानन्ति वा?

१. सर्वप्रथमं कस्मिन् देशे चायसस्यानि प्रवर्धितानि?
२. क्षीर-नवनीतयोः कतरस्य भारः अधिकः?
३. इस्लाम्धर्मस्य प्रसिद्धाः पञ्च 'मौलिकसिद्धान्ताः' के?
४. कुरान्ग्रन्थे येसुक्रिस्तवर्यः केन नाम्ना उल्लिखितः?
५. 'क्रिस्त'शब्दः कुतः उत्पन्नः?
६. सा नदी का, यस्याः कारणतः येसुक्रिस्तेन पावित्र्यं प्राप्तम्?
७. 'बेथल्हाम्'शब्दस्य कः अर्थः?
८. अन्तरिक्षे सर्वप्रथमं प्रयाणं कृतवतः रशियादेशीयस्य अन्तरिक्षयानस्य नाम किम्? तच्च प्रयाणं कदा प्रवृत्तम्?
९. क्रिकेट्क्रीडायाम् अत्यधिकतया षट्कानि केन सम्पादितानि? सः कस्य विक्रमम् अतिक्रम्य स्थितवान्?
१०. कस्मिन् युद्धे ऐदम्प्राथम्येन विषानिलस्य उपयोगः कृतः?
११. पाश्चात्यसङ्गीतस्य 'अधिष्ठानदेवता' इति कः उच्यते?
१२. मश्याः साहाय्येन लिखत् प्रथमं लेखनसाधनं किम्?
१३. एशियाखण्डे स्थितायाः सुविशालायाः मरुभूम्याः नाम किम्?
१४. क्रिस्टोफर् कोलम्बस् कस्य देशस्य निवासी आसीत्?
१५. कस्मिन् देशे ऐदम्प्राथम्येन कागदमयस्य रूप्यकस्य उपयोगः आरब्धः?

## उत्तराणि

१. चीनादेशे।
२. क्षीरस्य।
३. धार्मिकविश्वासः, दैनिकप्रार्थना, दानम्, रमजान्मासे उपवासाचरणम् (फाका), मक्काक्षेत्रं प्रति गमनं च।
४. ईसा इति नाम्ना।
५. ग्रीक्मूलात् 'क्रिस्टोस्'शब्दात्, यस्य च अर्थः 'दैवम् अधिकारं प्राप्तवान्' इति।
६. इस्रेल्देशे स्थिता जोर्डान्नदी।
७. भगवतः गृहम् इति, रोटिकास्थानम् इति वा। बेथलहाम् ईसामसीहवर्यस्य जन्मस्थानम्।
८. स्फुट्निक् इति। ४, अक्टोबर्, १९५७ तमे वर्षे एतेन अन्तरिक्षे प्रयाणं कृतम्।
९. इयान् बोथम्। (सोमर्सेट्) एतेन १९८५ तमे वर्षे ८० षट्कानि सम्पादितानि। १९३५ तमे वर्षे ६६ षट्कानि सम्पादितवतः अर्थर् वेल्लार्ड्वर्यस्य विक्रमम्।
१०. प्रथमे जागतिकयुद्धे। (१९१४-१९१८)
११. सिसीलियावर्यः।
१२. पक्षिपिच्छम्।
१३. अरबमरुभूमिः।
१४. इटलीदेशस्य।
१५. चीनदेशे।




## गौरीशङ्करशिखरस्य उपरि फूद्गयात्रा

गतस्य अक्टोबर्मासस्य तृतीये सप्ताहे ऐदम्प्राथम्येन द्वयोः फूद्गयोः (बलून्) साहाय्येन चत्वारः साहसिनः गौरीशङ्करशिखरम् अतिक्रम्य टिबेट्देशं प्राप्तवन्तः। नेपालतः प्रस्थितानाम् एतेषां प्रयाणं घण्टात्मकम् आसीत्। आस्ट्रेलिया-ब्रिटन्देशीयौ एकस्मिन्, ब्रिटन्देशीयौ च अपरस्मिन् आस्ताम्। आस्ट्रेलिया-ब्रिटन्देशौ सम्भूय, एतस्याः यात्रायाः व्यवस्थां कृतवन्तौ। ८,८४८ मीटर्-उन्नतस्य शिखरस्य ३०० मीटर् उपरि फूद्गयात्रा प्रवृत्ता। एतच्च शिखरं नेपालीयैः 'सागरमाता' नाम्ना आहूयते।

एषा फूद्गयात्रा काचित् ऐतिहासिकी घटना।

# र स वा र्ताः

## पूर्वानुभवे असति, समयस्फूर्तिः

अमेरिकादेशीया २३ वर्षीया पेटी शार्प् ६२ वर्षीयेन पित्रा सह एकयन्त्रात्मकेन 'पिप्पर्कब्' नामकेन विमानेन प्रयाणं कुर्वती आसीत्। आरेगन्प्रदेशात् भावचित्राणि स्वीकरणीयानि इति तस्याः इच्छा। एतस्मिन् विमाने द्वौ एव उपवेष्टुं शक्नुतः। विमानचालकः एतस्याः पिता एव। मध्ये मार्गं पिता उरोवेदनया पीड्यमानः वेदनाम् अनुभवन् आसनात् अधः पतितवान्। पेटी समयस्फूर्त्या अग्रे गत्वा निग्रहणपिञ्जं नोदयित्वा कथमपि विमानं सकुशलं भूमौ अवतारितवती।

आश्चर्यं नाम, इतः पूर्वं तया कदापि विमानं न चालितम् आसीत्!






# शास्त्रीयं सङ्गीतम्

कस्मिंश्चित् ग्रामे पूर्वं सोमनाथशास्त्री नाम कश्चन सङ्गीतविद्वान् आसीत्। यदा सः गायति तदा सभायां श्रोतारः मन्त्रमुग्धाः भवन्ति स्म। समयः कथं गच्छति इत्येव न जानन्ति स्म ते। अतः यत्र यत्र सोमनाथशास्त्रिणः सङ्गीतसभा भवति तत्र सर्वत्र जनानां महान् सम्मर्दः भवति स्म एव।

सोमनाथशास्त्रिणः प्रतिभायाः वार्ता राज्ञा अपि श्रुता। राजास्थानं प्रति तम् आह्वातुं राजा उपायनादिसहितं कञ्चित् दूतं सोमनाथशास्त्रिगृहं प्रति प्रेषितवान्।

राजधानीम् आगतः सोमनाथशास्त्री स्वपाण्डित्येन गानकौशलेन च सभ्यान् राजानं चापि तोषितवान्।

सन्तुष्टः राजा स्वकण्ठे स्थितं मणिहारं सोमनाथशास्त्रिणः कण्ठे स्थापितवान्। एतावदेव न, तस्मिन् एव दिने तम् आस्थानविद्वत्पदे नियोजितवान् चापि। राजानुग्रहप्राप्त्या सोमनाथशास्त्री अपि नितरां सन्तुष्टः।

महाराज्ञी अपि सोमनाथशास्त्रिणः सङ्गीतं श्रुतवती आसीत्। अन्तःपुरे अपि तदीयसङ्गीतगोष्ठी भवतु इति इच्छां प्रकटितवती राज्ञी। अनन्तरदिने एव अन्तःपुरे सङ्गीतगोष्ठ्याः व्यवस्था जाता।

सङ्गीतगोष्ठ्यां यदा सोमनाथशास्त्री रागालापं कृतवान् तदा राज्ञी असन्तृप्तिं प्रकटितवती। गानं स्थगयितुं सूचितवती च।

एतेन अवमाननेन नितरां खिन्नः अभवत् सोमनाथशास्त्री। मम गाने कोऽपि दोषः नास्ति इति स्वसमर्थने धैर्यं नास्ति, यतः राज्ञ्याः वचनं खण्डयितुं न इच्छति सः। किन्तु राज्ञ्या कृतं दोषारोपणम् अङ्गीकर्तुम् अपि न शक्नोति सः। अविद्यमानं दोषं कथं वा



अङ्गीकुर्यात् सः?

राज्ञी राजानं दृष्ट्वा– "महाविद्वान् एषः इति मत्वा एतं राजास्थानं प्रति आहूय सङ्गीताचार्यपदव्याम् उपवेशितवान् भवान्। एतस्य नैपुण्यं तु एतावता ज्ञातम्" इति उपहासपूर्वकम् उक्तवती।

तदा सोमनाथशास्त्री विनयेन– "महादेवि! क्षन्तव्यः अहम्। मम गानं सर्वदा सर्वथा निर्दुष्टम् एव भवति इति न। किन्तु अद्य तु दोषः न जातः। तत् आस्तां तावत्, मम सङ्गीतेन भवती तृप्ता न जाता। महाराज्ञीं भवतीं तर्पयितुम् अशक्तवतः मम सङ्गीताचार्यपदेन किम्? तत् पदम् अद्यैव परित्यजामि अहम्" इति सविषादम् उक्त्वा ततः निर्गन्तुम् उद्युक्तः।

राजा तस्य गमनं निवारयन् उक्तवान्– "शास्त्रिवर्य! सङ्गीताचार्यपदवी परितत्यक्तव्या इति तु केनापि न उक्तम्। भवतः रागालापेन राज्ञी न सन्तुष्टा इति एतावदेव खलु प्रवृत्तम्? अतः राज्ञ्याः प्रियेण अन्येन रागेण गायतु। तेन सर्वं सुसम्पन्नं भवति। मम अनुज्ञां विना भवता सङ्गीताचार्यपदवी त्यक्तुं न शक्या इति मा विस्मरतु। स्वयं त्यागः राजेच्छायाः विरोधाय भवेत्। एतत् तु सर्वथा अनुचितम्" इति।

एतावत्पर्यन्तं सुखेन जीवन् आसीत् सोमनाथशास्त्री। इदानीं तस्य स्वातन्त्र्यम् अपगतम् अस्ति। राजाश्रयः उष्णघृतम् इव। स्वीकारे अन्तर्दाहः। परित्यागे च अपराधः। 'अहो, दुर्गतिः मम' इति खेदम् अनुभूतवान् सोमनाथशास्त्री।

स्वस्य कोपं सन्तापं च अन्तः निगृह्य राजानं पृष्टवान् सोमनाथशास्त्री– "प्रभो, तर्हि मया इदानीं केन रागेण गातव्यम्?" इति।

"भवतः शास्त्रीयं राग-स्वरादिकं दूरे एव तिष्ठतु नाम। श्रवणरमणीयं यथा स्यात् तथा तालबद्धम् एकं जानपदगीतं गायतु तावत्" इति आज्ञापितवती राज्ञी।

"महाराज्ञि! तत्क्षेत्रे मया परिश्रमः न कृतः। अतः यदि सप्ताहात्मकः अवधिः दीयेत तर्हि तादृशेन एव सङ्गीतेन भवती तोषयिष्यामि" इति उक्तवान्

सोमनाथशास्त्री।

राज्ञी अङ्गीकारपूर्वकं शिरः चालितवती। राजा अपि अनुज्ञां दत्तवान्।

ततः सप्ताहानन्तरं प्रत्यागत्य सोमनाथशास्त्री अन्तःपुरे राज्ञ्याः पुरतः गीतवान्। तत् श्रुत्वा राज्ञी नितरां सन्तुष्टा। परिचारिकाः अपि करताडनं कृतवत्यः।

राजा सोमनाथशास्त्रिणम् अभिनन्द्य– "श्रीमन्! वचनं पालितं भवता। शास्त्रीये जानपदे च सङ्गीते भवतः अपूर्वं कौशलम्। इतः परं राज्ञ्याः प्रियं जानपदसङ्गीतम् एव राजास्थाने अपि भवतु। राज्ञ्याः अप्रियं शास्त्रीयं सङ्गीतं तत्र कदापि मास्तु" इति उक्तवान्।

सोमनाथशास्त्री मौनम् अङ्गीकारपूर्वकं शिरः चालितवान्। तस्य मुखदर्शनात् ज्ञायते स्म यत् एषः आदेशः तस्य सन्तोषाय न अभवत् इति।

ततः सप्ताहस्य अनन्तरं कश्चन अन्यदेशीयः सङ्गीतविद्वान् राजास्थानं प्रविश्य– "महाराज! शास्त्रीयसङ्गीते निपुणः अहं बहुषु देशेषु पण्डितान् जितवान् अस्मि। सङ्गीतविद्वांसः पराजयम् अङ्गीकृत्य आत्मना इतः पूर्वं सम्पादितानि बिरुद-कङ्कणादीनि मह्यं समर्पितवन्तः। यः शास्त्रीयसङ्गीतक्षेत्रे मां पराजेष्यते तस्मै मया सम्पादितं सर्वं दीयते। तेनैव पराजयः प्राप्तः चेत् यथोचितम् अहम् सत्करणीयः तदाश्रयदात्रा राज्ञा" इति उक्तवान्।

अन्यदेशीयस्य अपमानकराणि एतानि



वचनानि श्रुत्वा राजा कुपितः। सः साभिप्रायं सोमनाथशास्त्रिणं दृष्टवान्।

'इतःपरम् आस्थाने जानपदसङ्गीतम् एव गातव्यम् इति येन आदिष्टम् आसीत् सः एव इदानीं शास्त्रीयसङ्गीतस्य आवश्यकतां जानन् गौरवरक्षणार्थं मां शरणं गतः' इति आलोच्य 'देशस्य मानस्य रक्षणं ममापि कर्तव्यम्' इति निश्चित्य स्पर्धार्थं सिद्धः जातः सोमनाथशास्त्री।

रसवती स्पर्धा प्रवृत्ता। सोमनाथशास्त्री शास्त्रीयसङ्गीते अपूर्वं पाण्डित्यं प्रदर्शितवान्। तदीयं गानं श्रुत्वा सभ्याः आनन्दतुन्दिलाः जाताः। राजा अपि अतीव सन्तुष्टः।

अल्पे एव काले सः अन्यदेशीयः सङ्गीतविद्वान् पराजयम् अङ्गीकृतवान्। सोमनाथशास्त्रिणं साष्टाङ्गं नमस्कृत्य आत्मना सम्पादितानि बिरुद-कङ्कणादीनि समर्प्य सर्वान् नमस्कृत्य ततः निर्गतवान्।

'देशस्य गौरवं रक्षितवन्तं सोमनाथशास्त्रिणं विशेषतः सत्कृत्य उक्तवान् राजा – "मम मानः रक्षितः भवता। इतः परम् आस्थाने शास्त्रीयसङ्गीतगानम् एव प्रचलतु। यदि शास्त्रीयसङ्गीतक्षेत्रे भवतः पाण्डित्यं न अभविष्यत् तर्हि देशस्य गौरवं धूलिसात् अभविष्यत्। शास्त्रीयसङ्गीतस्य महत्त्वं राज्ञ्या अपि अवगतम् अस्ति। अतः सा अपि वदति यत् आस्थाने शास्त्रीयसङ्गीतगोष्ठी एव प्रचलतु, जानपदसङ्गीतगोष्ठी मास्तु इति" इति।

"प्रभो, तस्मिन् दिने जानपदसङ्गीतमात्रे राज्ञ्याः आदरं दृष्ट्वा अहं किञ्चिदिव खिन्नः आसम्। राज्ञ्याः तोषणार्थम् अनिच्छता अपि मया जानपदं सङ्गीतम् अभ्यस्तम्। एतेन मम हानिः काऽपि न जाता। मम ज्ञानं पाण्डित्यं च प्रवृद्धम्। इदानीं राज्ञ्या अपि शास्त्रीयसङ्गीतस्य महत्त्वं ज्ञातम् अस्ति। अतः इतः परं राजास्थाने उभयविधसङ्गीतम् अपि प्रचलतु। सर्वविधाः अपि जनाः सन्तुष्टाः भवन्तु" इति उक्तवान् सोमनाथशास्त्री।






# श्वश्र्वाः व्याधिः

नवोढा सुभद्रा पतिगृहप्रवेशानन्तरं सप्ताहाभ्यन्तरे एव गृहस्य समग्रां परिस्थितिं सम्यक् ज्ञातवती। श्वश्रूः यमुनाम्बा धार्ष्ट्यस्वभावयुक्ता। श्वशुरः नारायणः च नितरां मृदुः। अतः यमुनाम्बा यत् वदति तदेव प्रचलति गृहे। पत्या उक्तं सर्वं विना विरोधम् अङ्गीकरोति नारायणः। सा अप्रियम् अन्याय्यं वदति चेदपि सः मौनम् एव तिष्ठति स्म। सुभद्रायाः पतिः विनायकः पितुः असहायकतां दृष्ट्वा खिद्यते, मातुः दर्पं दृष्ट्वा कुप्यति च। तथापि मातुः दर्पः तं हतशक्तिकं करोति स्म।

सुभद्रया दृष्टं यत् प्रतिदिनं ननान्दा राधा चित्रान्नं स्वीकृत्य कुत्रापि दत्त्वा आगच्छति इति। एतत् दृष्ट्वा ननान्दारं राधां पृष्टवती– "भवती एतत् कुत्र नयति?" इति।

तदा राधा सहजस्वरेण उक्तवती– "पितामह्यै दातुं गच्छन्ती अस्मि" इति।

"तन्नाम, भवत्याः पितामही इतोऽपि जीवति?" इति आश्चर्येण पृष्टवती सुभद्रा।

"आम्। आगच्छतु मया सह। तां प्रदर्शयिष्यामि" इति उक्त्वा तां गोष्ठं नीतवती राधा। गोष्ठस्य पार्श्वे निर्मिते सामान्यप्रकोष्ठे रज्जुमये मञ्चे सुप्तां प्रदर्श्य उक्तवती सा– "एषा मम पितामही" इति।

राधायाः आगमनं ज्ञात्वा वृद्धा मञ्चस्य अधस्तात् मृत्पात्रं स्वीकृत्य पुरतः स्थापितवती। राधा तत्र चित्रान्नं स्थापितवती।

सुभद्रा तां वृद्धां भक्त्या नमस्कृतवती। तदा वृद्धा– "भवती एव वा मम पौत्रस्य विनायकस्य पत्नी? गृहे प्रचलन्तं कोलाहलं दृष्ट्वा एव मया ज्ञातम् आसीत्– विनायकस्य विवाहः प्रचलति इति" इति उक्तवती।

"अनामिका"



"आम्" इति उक्तवती सुभद्रा। वृद्धा तां हस्तसङ्केतेन समीपम् आहूय प्रीत्या तस्याः शिरः स्पृष्ट्वा अङ्गानि अपि स्पृष्ट्वा– "सौभाग्यवती भवतु वत्से! सुवर्णपुत्थलिका इव अस्ति भवती। विनायकं सम्यक् पालयतु" इति उक्तवती।

राधा त्वरां प्रदर्शयन्ती– "गच्छाव तावत्। भवत्याः अत्र आगमनं ज्ञातं चेत् माता मां तर्जयेत्" इति सुभद्राम् उक्तवती। ते ततः प्रस्थितवत्यौ।

मार्गे सुभद्रा राधां पृष्टवती– "वृद्धा पितामही किमर्थं तथा गोष्ठे स्थापिता?" इति।

"साङ्क्रामिकरोगेण पीडिता सा गृहे स्थापिता चेत् अन्ये अपि व्याधिग्रस्ताः स्युः इति भीतिः मम मातुः" इति उक्तवती राधा।

अनन्तरदिने एव वार्ता आगता यत् यमुनाम्बायाः माता अस्वस्था अस्ति इति। मातुः दर्शनार्थं त्वरया मातृगृहं प्रति प्रस्थितवती यमुनाम्बा।

तस्मिन् एव दिने भगिन्याः कुशलवार्तां ज्ञातुम् सुभद्रायाः अग्रजः सुदर्शनः आगतवान्। सुदर्शनः कश्चन समर्थः वैद्यः। सुभद्रा पत्युः पितामह्याः परिस्थितिम् अग्रजं निवेद्य– "वृद्धायाः परीक्षां किञ्चित् करोतु तावत्" इति निवेदितवती।

सुदर्शनः वृद्धां परीक्ष्य उक्तवान्– "वार्धक्यकारणतः समीचीनस्य आहारस्य अभावतः च सा एवं मञ्चम् आश्रिता अस्ति। शक्तिवर्धकम् औषधं दत्तं चेत् सा दृढा भविष्यति। शुद्धवायु-प्रकाशयुक्ते स्थले स्थापनीया सा" इति।

अग्रजेन यत् उक्तं तत् पतिम् उक्त्वा तस्य अनुज्ञां प्राप्य वृद्धां गृहम् आनीतवती सुभद्रा। अग्रजेन दत्तं बलवर्धकम् औषधं तस्यै यच्छन्ती प्रीत्या सेवां कृतवती सा।

सुदर्शनः ततः प्रतिगमनसमये सहोदर्याः हस्ते गुलिकाद्वयं संस्थाप्य श्वश्र्वाः मनसः परिवर्तनार्थम् उपायम् अपि संसूच्य ततः निर्गतवान्।

पञ्चदशदिनानाम् अनन्तरं गृहं प्रत्यागतवती यमुनाम्बा। गृहे उत्साहेन इतस्ततः सञ्चरन्ती वृद्धां दृष्ट्वा सा क्रोधेन–

"केन एषा गृहम् आनीता? सर्वे साङ्क्रामिकरोगं प्राप्य मरणं प्राप्नुयुः इति वा? कस्य औद्धत्यम् एतत्?" इति पृष्टवती।

तदा सुभद्रा– "आर्ये, मम अग्रजः समर्थः वैद्यः। तस्य चिकित्सया इदानीम् एषा स्वस्था अस्ति" इति विनयेन उक्तवती।

"एतस्मिन् गृहे अहं तृणसमाना जाता। सर्वे स्वयंनिर्णसमर्थाः जाताः। हुँ" इति स्वगतं वदन्ती प्रकोष्टं प्रविष्टवती यमुनाम्बा।

अग्रजस्य सूचनायाः अनुगुणम् अनन्तरदिने सुभद्रा अग्रजेन दत्तां गुलिकां द्रवीकृत्य पानीये योजयित्वा यमुनाम्बायै दत्तवती। सायङ्कालाभ्यन्तरे कासरोगं प्राप्तवती यमुनाम्बा। रात्रौ तु निरन्तरकासेन सा नितरां श्रान्ता।

मध्यरात्रे सुभद्रा पतिम् उत्थाय– "पूर्वं भवतः पितामही एतादृशेन कासरोगेण पीडिता यदा आसीत् तदा सा गोष्ठं प्रति खलु नीता? इदानीं सा तु स्वस्था जाता, एषा तेन रोगेण पीडिता जाता। अन्यान् अपि एषः रोगः पीडयेत्। अतः एतां गोष्ठे स्थापयाम तावत्" इति उक्तवती। ततः किं, विरोधे प्रदर्श्यमाने अपि, विनायकः राधादीनां साहाय्येन यमुनाम्बां गोष्ठस्थे प्रकोष्ठे शायितवान्।

अनन्तरदिने यदा राधया भोजनं नीतं तदा रुदती उक्तवती यमुनाम्बा– "अहम् अत्र स्थातुं न शक्नोमि। मां गृहं नयन्तु" इति।

"तत् कथं शक्येत? साङ्क्रामिकरोगेण ये



ग्रस्ताः भवन्ति ते अत्रैव खलु तिष्ठेयुः? भवती यदि गृहे तिष्ठेत् तर्हि अन्ये अपि रोगग्रस्ताः स्युः। अतः भवती अत्रैव तिष्ठतु" इति उक्तवती राधा।

पत्नीं द्रष्टुम् आगतं पतिम् अपि प्रार्थितवती यमुनाम्बा– 'मां गृहे एव स्थापयन्तु' इति।

तदा नारायणः– "किमर्थं रोदिति भवती? भवती स्वश्वश्रूविषये यत् कृतवती तदेव भवत्याः विषये कृतवती सुभद्रा। सुभद्रया कृतं यदि अनुचितं, तर्हि इतः पूर्वं भवत्या कृतम् अपि अनुचितम् एव खलु? तद्विषये पश्चात्तापः प्राप्तः वा भवत्या? ज्येष्ठाः यथा आचरन्ति तथैव अन्ये अपि आचरन्ति। यदि अहं किमपि वदेयं तर्हि भवत्याः स्नुषा माम्

अपि तर्जयेत्। अहम् अधिककालम् अत्र तिष्ठामि चेत् माम् अपि अत्रैव शाययेयुः। अतः गच्छामि तावत्" इति उक्त्वा ततः निर्गतवान्।

आत्मना यत् कृतं तद्विषये पश्चात्तापम् अनुभवन्ती यमुनाम्बा अश्रूणि स्रावितवती। किन्तु स्नुषायाः व्यवहारविषये तस्याः महान् कोपः। दिनद्वयम् अतीतं चेदपि तया कोऽपि आहारः न स्वीकृतः। अन्नपात्रं धेनूनां पुरतः क्षिप्तवती सा। तृतीये दिने सा उपवासकारणतः मूर्च्छां गतवती।

दुर्गन्धमये गोष्ठे तिष्ठन्त्याः श्वश्र्वाः शोचनीयां स्थितिं पुनः पुनः स्मृत्वा खेदम् अनुभवन्ती अपि सुभद्रा कथमपि आत्मानं निगृहीतवती आसीत्। सा शैत्योपचारेण श्वश्रूं सचेतनां कृतवती। तां गृहं नेतुं विनायकः राधा च आगतवन्तौ। यमुनाम्बा कोपेन– "अहं गृहं न आगमिष्यामि। अत्रैव मरणं प्राप्स्यामि" इति उक्तवती।

तदा विनायकः उक्तवान्– "अम्ब! भवती अत्रैव स्थातुम् इच्छति चेत् तथैव त्यजेम वयम्। किन्तु पितामह्याः सन्तापं द्रष्टुम् अशक्ताः वयम् अत्र आगताः। भवत्याः दुःस्थितिं स्मरन्ती पितामही दिनत्रयतः जलम् अपि न स्वीकृतवती। निराहारकारणतः सा शय्याम् आश्रितवती अस्ति। सा सान्त्वनीया भवत्या" इति।

श्वश्र्वाः सहृदयतां स्मरन्त्याः यमुनाम्बायाः नेत्राभ्याम् अश्रूणि आगतानि। 'या मम कष्टं स्मृत्वा जलम् अपि न सेवते तादृशी स्नेहमयी मया बहुकालं यावत् उपेक्षया दृष्टा' इति पश्चात्तापम् अनुभूतवती सा। अतः विना विरोधम् उत्थाय श्वश्र्वाः समीपं गत्वा साष्टाङ्गं नमस्कृत्य अश्रुधारया तस्याः पादौ क्षालितवती।

श्वश्र्वाः मनसः परिष्कारः जातः इति निश्चित्य सुभद्रा अग्रजेन दत्ताम् अपरां गुलिकां जले मिश्रीकृत्य यमुनाम्बायै दत्तवती। तस्य पानतः यमुनाम्बा स्वस्था जाता।






एकेनैव आयुधप्रहारेण सर्वान् वानरान् मारयिष्यामि इति आयुधम् उन्नीय सगर्वं वदतः राक्षसान् दृष्ट्वा खिन्नः कुलहितचिन्तकः विभीषणः गाम्भीर्येण उत्थाय अग्रे आगत्य रावणं दृष्ट्वा नमस्कृत्य उक्तवान्– "राक्षसकुलतिलक! अग्रज! कुलस्य देशस्य च हितार्थं मया अप्रियम् अपि किञ्चित् निवेद्यते। यदा जटिला समस्या आगमिष्यति तदा प्रमुखेण प्रथमं सामदानभेदोपायाः आश्रयणीयाः। दण्डोपायः अन्ते चिन्तनीयः। रामः वनवासी तापससदृशः इत्यतः अल्पबलः इति कदापि न चिन्तनीयम्। रामदूतः हनूमान् विनाविघ्नं समुद्रं लङ्घयित्वा अत्र आगत्य उत्पातं जनितवान् यत् तत् रामस्य दैवानुकूल्यं द्योतयति। अतः एव भवान् भीतिं प्राप्य एतां सभाम् आयोजितवान्। अभिमानकारणतः भवता भीतिः न प्रदर्शिता, तावदेव। 'खरदूषणादीन् मारयन् रामः दोषं कृतवान् इत्यतः सीता मया अपहृता' इति आत्मानं समर्थयेत् भवान्। रामः आत्मरक्षणार्थं खरदूषणादीन् मारितवान् इत्यतः वस्तुतः रामेण कोऽपि दोषः न कृतः। प्रत्युत सीताम् अपहरता भवता दोषः कृतः। वैरवर्धकम् एतत् कृत्यं भवतः प्रियं स्यात् चेदपि एतस्य फलं तु हानिकारकम् एव। एकम् अनिष्टम् अनिष्टपरम्पराम् एव वर्धयति। अतः मम आशयः यत् सीता रामाय प्रत्यर्पणीया इति। महापराक्रमशालिनः रामस्य वैरं कदापि हितकारकं न। सीता प्रत्यर्पिता चेत् रामस्य



भवतः भीरुतायाः उपदेशः? कस्माच्चित् अपि भयं नास्ति मम। भवतः वचनं शृण्वता मया हनूमान् निर्मुक्तः यत् तस्य फलं प्राप्तं मया। पुनः भवद्वचनपालनरूपां मूर्खतां न आचरामि अहम्। सीता अत्र अस्ति इति ज्ञात्वा अपि रामः किं वा कर्तुं शक्नुयात्? सीताम् इतः नेतुं कोऽपि न शक्नोति। दुर्भेद्या लङ्का दुर्भेद्या एव स्थास्यति" इति।

एतावत् उक्त्वा रावणः मन्त्रिणः दृष्ट्वा 'युद्धतन्त्ररचनार्थं श्वः समालोचनं भवतु' इति उक्त्वा सिंहासनात् उत्थाय सुवर्णरथम् आरुह्य स्वभवनं गतवान्।

अनन्तरदिने पुनः सभा प्रवृत्ता। रावणः सभां प्रविश्य सिंहासनम् अलङ्कृतवान्। रावणः किं वदेत् इति प्रतीक्षमाणाः सन्ति सर्वे अपि। मौनप्रसङ्गं दूरीकुर्वन् सेनानायकं प्रहस्तम् उक्तवान् रावणः– "नगरस्य रक्षणार्थं विशेषव्यवस्था भवतु। अधिकान् भटान् रक्षणकार्ये नियोजयतु" इति।

प्रहस्तः झटिति उत्थाय रावणस्य आज्ञायाः पालनार्थं योग्यां व्यवस्थाम् उपकल्प्य पुनः सभां प्रविश्य रावणं विनयेन नमस्कृत्य– "आज्ञा कार्यान्विता कृता। अग्रे किं करणीयम् इति आज्ञापनीयाः वयम्" इति निवेदितवान्।

तदा रावणः सभाम् उद्दिश्य उक्तवान्– "दण्डकारण्यतः मया सीता आनीता इति, तत्सदृशी सुन्दरी त्रिषु लोकेषु अन्या नास्ति इति, रामः तस्याः अन्वेषणार्थं महान्तं प्रयत्नं

कोपः शान्तः भवेत्। सः भवन्तं क्षाम्येत्। विना कारणं सः युद्धार्थं प्रवृत्तः न भवति इत्यतः युद्धभीतिः अपि अपगता भविष्यति। सीता रामाय प्रत्यर्पिता चेत् भवता कोपदूरीकरणपूर्वकं विवेकः प्रदर्शितः इति कीर्तिः प्राप्यते। कोपशवीभूतेन भवता लङ्कायाः हितं न उपेक्षणीयम्। कुलरक्षणरूपः महान् भारः भवतः उपरि अस्ति। अतः विचिन्त्य पदस्थापनं वरम्" इति।

विभीषणस्य वचनानि शृण्वतः रावणस्य कोपः नितरां प्रवृद्धः। विभीषणस्य वचनं रावणकोपाग्नेः आज्यम् अभवत्। अतः रावणः कोपेन गर्जितवान्– "समाप्तः वा

कुर्वन् अस्ति इति च भवन्तः सर्वे जानन्ति एव। अत्र उपस्थितेषु कुम्भकर्णः एकः एव एतं विषयं न जानीयात्। यतः यदा सः दीर्घनिद्रायाम् आसीत् तदा एषा घटना प्रवृत्ता। रामः आगत्य मम रक्षणं करिष्यति इति भावयति सीता। समुद्रलङ्घनं तावत् सुकरं न। अतः सद्यः तु चिन्ता नास्ति। यदि कदाचित् केनापि उपायेन रामः लङ्कासमीपम् आगच्छेत् तर्हि अस्माभिः किं करणीयम्? समुद्रस्य अपरस्मिन् तीरे रामः, लक्ष्मणः, सुग्रीवः, वानरसेना च उपस्थिताः सन्ति इति वार्ता श्रूयते। इदानीम् अस्माकम् अग्रिमं पदं कीदृशं स्यात्?" इति।




रावणस्य कथनं श्रुत्वा कोपं प्राप्य कुम्भकर्णः उत्थाय उक्तवान्– "राक्षसेश्वर! विपदि उपस्थितायाम्, इदानीं किं करणीयम् इति अस्मान् पृच्छन् अस्ति भवान्। रामस्य सामर्थ्यं कीदृशम् इति इतः पूर्वं भवान् न जानाति स्म वा? सीतापहरणतः पूर्वं भवान् अस्माभिः सह समालोचनं कृतवान् वा? न खलु? इदानीं समालोचनेन किं प्रयोजनम्। सीतायाः अपहारः महतीं विपत्तिम् आनयेत् इति पूर्वं ज्ञातुं न शक्तवान् आसीत् भवान्। इदानीं ज्ञातवान् स्यात्। किन्तु मार्गान्तरचिन्तनार्थं स्थितः कालः तु गतः। इदानीम् अलं चिन्तया। सर्वं सम्भूय सम्मुखीकरवाम वयम्। यः कोऽपि शत्रुः आगच्छतु नाम, अहं तं मारयिष्यामि। यदि अहं गदाम् उन्नीय उत्तिष्ठेयं तर्हि देवेन्द्रप्रभृतयः अपि पलायनं कुर्युः। रामलक्ष्मणयोः मारणं मक्षिकामारणतुल्यम्। अग्रज़! भीतिः मास्तु। भोगजीविनः वयं सर्वान् भोगान् अनुभवेम" इति।

कुम्भकर्णस्य वचनं श्रुत्वा रावणः किञ्चिदिव खिन्नः। तदा महापार्श्वः उत्थाय उक्तवान्– "प्रभो, सीताविषये भवता यत् कृतं तत् उचितम् एव। भवता कृतं कार्यं धिक्कर्तुं निन्दितुं वा कोऽपि न अर्हति। वयं सर्वे भवदाज्ञापालकाः। कुम्भकर्णः इन्द्रजित् अन्ये वीराः च वयं बहवः भवतः पक्षस्य समर्थकाः स्मः। अतः निश्चिन्ततया तिष्ठतु भवान्। आज्ञामात्रेण अस्मान् अनुगृह्य सुखेन



तिष्ठतु भवान्" इति।

"महापार्श्व! पूर्वं कदाचित् पुञ्जिकस्थला नाम अप्सराः ब्रह्मसमीपं गच्छन्ती आसीत्। तस्याः रूपेण आकृष्टः अहं किञ्चिदिव अनौचित्येन व्यवहृतवान्। सा ब्रह्माणं प्रवृत्तं समग्रं निवेदितवती। तदा ब्रह्मा शप्तवान् यत् अग्रे यदि भवान् बलात् परस्त्रियं वशीकर्तुं प्रयत्नं कुर्यात् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् इति। शापभीतः अहं सामर्थ्ये सत्यपि संयमं प्रदर्शयन् अस्मि। प्रायः रामः एतत् दृष्ट्वा चिन्तितवान् स्यात् यत् मम सामर्थ्यम् अल्पम् इति। अविवेकी सः मृत्युं स्वयम् आह्वयन् अस्ति। आगच्छतु सः अत्र। रावणः कीदृशः इति ज्ञात्वा प्रतिगच्छतु नाम" इति उक्तवान् रावणः।

तदा विभीषणः पुनः उत्थाय उक्तवान्— "अग्रज! सीतामोहजाले पतितः भवान् परिस्थितिं विवेक्तुं न शक्नोति प्रायः। यदि अल्पः विवेकः दूरदर्शिता वा स्यात् तर्हि अपायस्थितिः ज्ञाता अभविष्यत्। सीता काचित् घोरसर्परूपिणी। चिन्तारूपं विषं तस्याः हृदये अस्ति। हासः दंष्ट्रायते। अङ्गुल्यः फणायन्ते। तस्याः निश्श्वासः घोरम् अग्निम् उद्वमति। स च अग्निः रामशक्तिरूपेण वायुना प्रेरितः सन् लङ्काम् एव नाशयेत्। यदा लङ्का ज्वलिष्यति तदा इन्द्रजित्-कुम्भकर्णप्रभृतयः अपि शलभायन्ते। भवान् अपि तत्र आहुतिः भवेत्। अतः आत्मरक्षणं, लङ्कारक्षणं, कुलरक्षणं च चिन्तनीयं भवता" इति।

प्रहस्तः कठोरैः वचनैः विभीषणस्य निन्दनं कृतवान्। 'रावणसमः लोके अन्यः नास्ति, अतः न काऽपि भीतिः' इति उक्तवान् सः।

अत्रान्तरे इन्द्रजित् उत्थाय विभीषणम् उक्तवान्— "भवान् भयरूपेण सर्पेण दष्टः अस्ति। अतः एव एतादृशी भीतिः भवतः। भवादृशः भीरुः पवित्रे पुलस्त्यकुले इतः पूर्वं न जातः, इतः परं न भविष्यति अपि। कुलकलङ्कः भवान्। यः अहं देवान् इन्द्रं च जितवान्, तस्मिन् मयि स्थिते, अस्माकं भयं कुतः?" इति।

तदा विभीषणः शान्तस्वरेण उक्तवान्—

"वत्स! इन्द्रजित्! भवतः पराक्रमः असाधारणः इत्यत्र नास्ति सन्देहः। किन्तु रामस्य सामर्थ्यं भवतः सामर्थ्यम् अपि अतिशेते। क्रुद्धस्य रामस्य बाणान् किं, दृष्टिं सम्मुखीकर्तुम् अपि एतस्मिन् लोके कोऽपि न शक्नोति। अतः एव अहं पुनः पुनः वदामि— सीता प्रत्यर्पणीया इति। केषाञ्चित् दुरभिमानः कुलनाशकः न भवेत्" इति।

विभीषणस्य एतादृशानि वचनानि श्रोतुम् अशक्नुवन् रावणः तं बहुधा विनिन्द्य, कुलकण्टकः इति गर्हयित्वा,— "अये विभीषण! भवता यानि वचनानि उक्तानि तादृशानि यदि अन्यः अवदिष्यत् तर्हि सः प्राणैः वियुक्तः अभविष्यत्। मम अनुजः इत्यतः भवान् इतोऽपि जीवति" इति उक्तवान्।

तदा विभीषणः अपि कोपं प्राप्य रावणं पश्यन्— "अग्रज! भवान् पितृसमानः। भवान् मां तर्जयति चेदपि मम नास्ति खेदः। भवतः कुलस्य च हितं मनसि निधाय अहं यत् उक्तवान् तत् भवते न अरोचत। अग्रज! सततं प्रियवादिनः लोके बहवः भवन्ति। किन्तु अप्रियस्य च पथ्यस्य वक्ता सुदुर्लभः। अप्रियं मया यत् उक्तं तदर्थं क्षन्तव्यः अहम्। अहितं कार्यं क्रियमाणानां भवतां तु क्लेशः। इतः परम् एतादृशः क्लेशः भवतां न भविष्यति। अहम् इतः निर्गच्छामि। किन्तु अहं सदा भवतः हितम् एव इच्छामि। आत्मानं, लङ्कां, राक्षसकुलं च रक्षतु" इति उक्त्वा गदाम् उन्नीय चतुर्भिः सहचरैः सह





ततः निर्गतवान्।

एवं निर्गतः विभीषणः आकाशमार्गेण रामलक्ष्मणयोः समीपं गतवान्।

रक्षणकार्ये नियुक्ताः वानराः आकाशमार्गेण आगच्छतः पञ्च जनान् दूरात् एव दृष्टवन्तः। ते झटिति गत्वा सुग्रीवम् एतं विषयं निवेदितवन्तः। 'अस्माकं मारणार्थं रहस्यज्ञानार्थं वा शत्रुपक्षीयाः आगतवन्तः स्युः' इति भावितवान् सुग्रीवः।

वानराः शिलाखण्डान्, वृक्षमूलानि, आयुधानि च स्वीकृत्य तेषां मारणार्थम् उद्युक्ताः सन्तः सुग्रीवस्य आज्ञां प्रतीक्षमाणाः स्थितवन्तः।

अनलः, शरभः, सम्पातिः, प्रभसः, इत्येतैः चतुर्भिः सहचरैः सह आगतः विभीषणः आकाशे एव स्थित्वा सुग्रीवादयः यथा शृणुयुः तथा उच्चस्वरेण उक्तवान्– "भो भोः, रामलक्ष्मणसुग्रीवादयः! दुष्कार्यरतस्य रावणस्य अनुजः अहम्। विभीषणः इति मम नाम। रावणः जटायुं मारयित्वा सीताम् अपहरन् अक्षम्यम् अपराधं कृतवान्। परमदुःखिता सीतादेवी राक्षसीनां मध्ये अस्ति, किन्तु सा सकुशला। सीता रामाय अर्पणीया इति अहं रावणं बहुधा बोधितवान्। विनयेन प्रार्थितवान्। किन्तु दुर्विधिना प्रेर्यमाणः सः औषधतुल्यं मम हितवचनं तिरस्कृतवान्। अवाच्यैः शब्दैः मां निन्दितवान्। अतः पत्नीपुत्रादीन् अपि परित्यज्य चतुर्भिः सहचरैः सह आगतवान् अस्मि। रामं शरणं गतवान् अस्मि। एते चत्वारः अपि मदीयाः विश्वासार्हाः" इति।

एतत् श्रुत्वा सुग्रीवः रामम् उक्तवान्– "रावणस्य अनुजः विभीषणः चतुर्भिः सहचरैः सह आगत्य शरणं प्रार्थयते। किन्तु राम! जागरूकता भवतु। राक्षसाः न विश्वासार्हाः। ते कुटिलविद्यानिपुणाः। रावणः एव चाररूपेण विभीषणं प्रेषितवान् अपि स्यात्। उपायेन अस्मान् मारयेत् विभीषणः। शत्रोः अनुजः कथमपि विश्वासार्हः न। अतः एतस्य एतत्सहचराणां च मारणम् एव उचितम्" इति।

रामः क्षणकालं विचिन्त्य हनूमत्प्रभृतीन् पश्यन् उक्तवान्– "सुग्रीवेण सुविचिन्त्य

यत् उक्तं तत् श्रुतं भवद्भिः। भवताम् आशयम् अपि ज्ञातुम् इच्छामि अहम्। अतः स्वाभिप्रायं प्रकटयन्तु तावत्'' इति।

तदा अङ्गदः उक्तवान्– ''शत्रुपक्षीये विश्वासः कदापि न करणीयः'' इति।

''कञ्चित् दूतं सम्प्रेष्य तस्य चिन्तनं कीदृशम् इति ज्ञातव्यम्'' इति सूचितवान् शरभः।

''कश्चन दूतः गत्वा, आगतः विभीषणः एव वा, उत विभीषणवेषधारी अन्यः वञ्चकः इति ज्ञात्वा आगच्छतु। विभीषणः तु सज्जनः इति श्रूयते। मायामृगप्रसङ्गः स्मर्तव्यः अस्माभिः। राक्षसानां वञ्चनारीतिः बहुविधा भवितुम् अर्हति'' इति उक्तवान् जाम्बवान्।

तदा हनूमान् उत्थाय– ''मम तु भाति यत् उपस्थितस्य विभीषणस्य परीक्षा करणीया नास्ति इति। सादरं स्वागतीकरणम् एव उचितम् इदानीम्। संशयात्मा विनश्यति इति अभिज्ञाः वदन्ति। अतः विभीषणे विश्वासः करणीयः। विभीषणः स्वभावेन सज्जनः इति वयं सर्वे जानीमः एव। दूरस्थस्य परीक्षणार्थं दूतस्य प्रेषणम् उचितं स्यात्, न तु समीपस्थं प्रति। कालवशङ्गतः विभीषणः अत्र आगतः अस्ति। तस्य आगमनस्य पृष्ठतः दुरुद्देशः नास्ति। अस्मासु समालोचनं कुर्वत्सु अपि, निर्भीकतया सः स्थितवान् यत् तदेव तस्य निर्वञ्चनतां प्रदर्शयति। यदि तस्मिन् वञ्चना स्यात् तर्हि सः विचलितः अभविष्यत्। सः रावणं धर्ममार्गम् उपदिश्य अप्रियतां सम्पाद्य आगतः स्यात् इत्यत्र सन्देहः मास्तु। मया यदा लङ्का गता तदा अपि सः रावणं धर्ममार्गम् एव उपदिष्टवान्। विभीषणः ऋजुमार्गेण एव आगतः। धैर्येण अपि आगतः। अस्माकम् अनुज्ञां प्रार्थयते अपि। वञ्चकः एवं कदापि न व्यवहरेत्। वालिनं हत्वा सुग्रीवाय राज्यं यथा दत्तं तथा रावणं हत्वा विभीषणाय राज्यं दातव्यम्। विभीषणाय आश्रयदानम् एव उचितम् इदानीम्। श्रुत्वा भवन्तः प्रमाणम्'' इति।





# असन्तृप्तः शिल्पी

सहस्रशः वर्षेभ्यः पूर्वं चुवाङ्गदेशे महाशिल्पी कश्चन आसीत्। शिल्पनिर्माणार्थं कश्चन धनिकः तं स्वगृहम् आनायितवान्। विशालं भवनम्, अतुलम् ऐश्वर्यम्, भोगसाधनानि च तत्र दृष्टानि शिल्पिना। एतत्सर्वं दृष्ट्वा सः शिल्पी चिन्तितवान्– 'अहो ऐश्वर्यम्! शिल्पकार्ये तु सदा कष्टम् एव। एतादृशम् ऐश्वर्यं यदि मम स्यात् तर्हि जीवनं सुखमयं भवेत्' इति।

शिल्पनः अपेक्षां ज्ञात्वा काचित् देवता अपारेण ऐश्वर्येण तम् अनुगृहीतवती। एतेन शिल्पी नितरां सन्तुष्टः अभवत्।

पुनः अल्पः कालः अतीतः। कदाचित् कश्चन उन्नताधिकारी सपरिवारं पर्यटनार्थं प्रस्थितः अलङ्कृतायां शिबिकायाम् उपविश्य गच्छन् आसीत्। अभिमुखम् आगताः सर्वे तं विनयेन नमस्कुर्वन्ति स्म। किन्तु धनमदेन युक्तः शिल्पी तं न नमस्कृतवान्। एतेन क्रुद्धः अधिकारी भृत्यद्वारा शिल्पिनम् आनाय्य कशया सम्यक् ताडयित्वा ततः अग्रे गतवान्।

'केवलं धनम् अस्ति चेत् न पर्याप्तम्। अधिकारः अपि आवश्यकः। अतः कोऽपि उच्चाधिकारः यदि मम स्यात् तर्हि वरं भवेत्' इति आलोचितवान् शिल्पी।

देवता शिल्पिने अधिकारम् अपि दत्तवती। तदा तु धनमदेन सह अधिकारमदः अपि युक्तः अभवत्।

कदाचित् शिल्पी अनुचरैः सह पर्वतमार्गेण गच्छन् तत्र काश्चन सुन्दरीः दृष्टवान्। ताभिः आकृष्टः सः ताः पीडयितुम् उद्युक्तः। तदा ताः सुन्दर्यः आक्रोशनं कृतवत्यः। तासाम् आक्रोशनं श्रुत्वा केचन अटविकाः परशु-मुसल-दण्डान् गृहीत्वा आगत्य शिल्पिनं

"चुवाङ्गदेशीया जानपदकथा"

सम्यक् ताडितवन्तः।

'मम महाधिकारे सत्यपि एते अटविकाः माम् एवं पीडितवन्तः। अतः अटविककुले जन्म प्राप्तं चेत् वरं भवेत्' इति आलोचितवान् शिल्पी।

देवता तत्क्षणे एव तम् अटविकं कृतवती।

कदाचित् मध्याह्नसमये सः क्षेत्रे कार्यमग्नः आसीत्। सूर्यतापेन सः नितरां पीडितः जातः। तावता आकाशे नीलमेघः कश्चन सूर्यम् आवृत्य अतिष्ठत्। सूर्यतापः अपगतः।

एतत् दृष्ट्वा शिल्पी अचिन्तयत्– 'अहो, शक्तिः नाम मेघस्य एव। यदि अहं नीलमेघः भवेयं तर्हि वरं भवेत्' इति।

देवता अपरक्षणे एव तं मेघम् अकरोत्। तावता तीव्रः वायुः वेगेन आगत्य मेघम् इतस्ततः आटयत्।

'अहो, मेघस्य अपेक्षया अपि वायोः सामर्थ्यम् अधिकम्' इति अचिन्तयत् मेघः। देवता तं वायुं कृतवती। अल्पे एव काले वायुः अग्रे अगच्छत्। पर्वतेन घट्टितस्य तस्य गतिः अवरुद्धा।

'अहो, वायोः अपेक्षया पर्वतस्य सामर्थ्यम् अधिकम्। अतः अहं महाशिला यदि भवेयं तर्हि वरं स्यात्' इति अचिन्तयत् वायुः। अपरक्षणे वायुः शिलारूपं प्राप्तवान् आसीत्।

कदाचित् केचन शिल्पिनः तं प्रदेशम् आगतवन्तः। महाशिलां दृष्ट्वा ते चिन्तितवन्तः– 'महती शिला एषा। शिल्पार्थम् उपयोगाय भवेत्। अतः एतां भञ्जयित्वा नयेम वयम्' इति। शिलायाः भञ्जनार्थं ते उद्युक्ताः अभवन्।

एतत् दृष्ट्वा शिलारूपी शिल्पी देवतां प्रार्थितवान्– "अम्ब! रक्षतु" इति।

"शिल्पिन्! शिल्पिनः सामर्थ्यं ज्ञातं खलु? पूर्वं यत् रूपम् आसीत् तदेव वरम् इति ज्ञातं खलु? शिल्पिरूपम् एव प्राप्नोतु भवान्" इति उक्त्वा शिलां शिल्पिनं कृतवती देवता।

तदनन्तरं शिल्पी असन्तृप्तिं परित्यज्य स्वकार्ये श्रद्धां प्रदर्शयन् सुखेन जीवितवान्।



# विद्याभ्यासः किमर्थम्?

कुन्तलदेशं पूर्वं कुशलसेनः नाम राजा पालयन् आसीत्। कदाचित् तस्य मनसि सन्देहः उत्पन्नः यत् अध्ययनं किमर्थं करणीयम् इति।

अतः सः कदाचित् राजसभायां स्वसन्देहम् उपस्थापितवान्।

"विद्याभ्यासः कृतः चेत् उच्चः उद्योगः प्राप्यते। ततः प्रभूतं धनं सम्पादयितुं शक्यते" इति उक्तवान् कश्चन पण्डितः।

"विद्याभ्यासतः कीर्तिः प्राप्यते" इति उक्तवान् प्रधानमन्त्री।

"विद्याभ्यासः कृतः चेत् जनाः आदरं प्रदर्शयन्ति। तेन जीवने तृप्तिः प्राप्यते" इति उक्तवान् कश्चन कविः।

"विद्यावान् सर्वत्र पूज्यते। विद्यारूपं धनं केनापि चोरयितुं न शक्यते। अतः विद्याधनं सर्वधनप्रधानम्" इति उक्तवान् कश्चन विद्वान्।

किन्तु एतेषु केनापि उत्तरेण राजा न तृप्तः। राज्ञः एषः भावः विदूषकेण लक्षितः। अतः सः उत्थाय उक्तवान्– "प्रभो, समुचितम् उत्तरम् अहं वदामि। किन्तु मम भीतिः यत् मम उत्तरं श्रुत्वा भवान् क्रुद्धः भवेत् इति" इति।

"भीतिः मास्तु। निस्सङ्कोचं वदतु तावत्। अप्रियम् अपि उत्तरं श्रोतुम् अहं सिद्धः एव" इति उक्तवान् राजा।

"इदानीं भवतः मनसि यादृशः सन्देहः, तादृशः न उत्पद्येत इति, उत्पन्नः चेदपि सभ्यान् कश्चित् न पीडयेत् इति एतदर्थं विद्याभ्यासः आवश्यकः" इति उक्तवान् विदूषकः।

विदूषकस्य उत्तरं श्रुत्वा सभासदः सर्वे उच्चैः हसितवन्तः। राजा तु एतस्य उत्तरस्य श्रवणात् क्षणकालं स्तब्धः। किन्तु अनन्तरक्षणे खेदं मनस्तः अपनीय विदूषकस्य चातुर्यं स्मरन् अन्यैः सह स्वयम् अपि हसितवान्।






# धर्मयुद्धम्

अलकापुरीं पूर्वं विक्रमदेवः नाम राजा पालयन् आसीत्। कण्ठीरवः शूरः कश्चन सेनाधिपतिः। कदाचित् विजयदशमीदिने राजा, कण्ठीरवः, अन्ये परिवारसदस्याः च चन्द्रिकायाम् उपविश्य सन्तोषेण वार्तालापं कुर्वन्तः आसन्।

अत्रान्तरे कश्चन अश्वारोही पुरुषः तत्र आगतः। तदा कण्ठीरवः झटिति उत्थाय पृष्टवान्– "कः भवान्? शत्रुः उत मित्रम्?" इति।

तदा सः अश्वारोही– "न मित्रं, न वा शत्रुः। पराक्रमशाली कश्चन युद्धवीरः अहम्" इति उक्तवान्।

"तर्हि भवान् केन उद्देशेन अत्र आगतवान्?" इति पृष्टवान् राजा विक्रमदेवः।

"योधः किम् अन्यत् इच्छति, बलाबलपरीक्षायाः ऋते?" इति प्रतिप्रश्नं कृतवान् सः अश्वारोही। तत्र उपस्थिताः सर्वे तम् आश्चर्येण दृष्टवन्तः। श्मश्रुलस्य आजानुबाहोः च तस्य हस्ते कश्चन तीक्ष्णः परशुः आसीत्।

"अस्तु तावत्, भवता सह युद्धं कर्तुम् अस्माकं सेनापतिः कण्ठीरवः सिद्धः अस्ति" इति उक्तवान् राजा विक्रमदेवः।

राज्ञः नेत्रसङ्केतस्य अनुसारं कण्ठीरवः द्वित्राणि पदानि अग्रे स्थापितवान्।

तदा सः अश्वारोही योधः हसन्– "युद्धार्थम् अहं न आगतः। मम हस्ते स्थितः परशुः दृश्यते खलु? एतं स्वीकृत्य भवत्सु कश्चित् मम कण्ठे सकृत् प्रहरतु। यः मां प्रहरति तेन अग्रिमवर्षे मम समीपम् आगत्य मया दीयमानः एकः परशुप्रहारः सोढव्यः" इति उक्तवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

विचित्राम् एताम् अपेक्षां श्रुत्वा सर्वे हसितवन्तः। 'तीक्ष्णस्य परशोः प्रहारं प्राप्य अपि एषः योधः किं जीवेत्? अग्रिमवर्षे प्रतिप्रहारः किं शक्येत? सर्वं विचित्रम्!' इति चिन्तितवन्तः ते।

योधः परशुप्रहारस्वीकरणार्थं सिद्धः सन् स्थितवान्। कण्ठीरवः गाम्भीर्येण अग्रे गत्वा योधस्य परशुम् उन्नीय हस्तद्वयेन दृढं गृहीत्वा बलेन कण्ठे प्रहृतवान्।

अहो आश्चर्यम्! परशोः अर्धभागः कण्ठे प्रविष्टः। किन्तु बिन्दुमात्रम् अपि रक्तं न पतितम्। योधः तु सर्वथा अव्रणितः।

योधः हसन् परशुं हस्तेन स्वीकृत्य— "अग्रिमवर्षे एतस्मिन् एव दिने भवता मम वसतिं गिरिदुर्गं प्रति आगन्तव्यम्" इति उक्त्वा मार्गं निर्दिश्य अश्वम् आरुह्य ततः निर्गतवान्।

तत्र उपस्थिताः सर्वे तस्य विचित्रस्य योधस्य निर्गमनम् आश्चर्येण निर्निमेषं पश्यन्तः स्थितवन्तः।

एकं वर्षम् अतीतम्। विजयदशमी अपि आसन्ना। राजा विक्रमदेवः मन्त्री च चिन्ताक्रान्तौ जातौ।

'वचनदानस्य अनुगुणं कण्ठीरवः अरण्यस्थस्य योधस्य समीपं प्रेषणीयः एव। यदि वचनभङ्गः क्रियेत तर्हि राज्ञः राज्यस्य च अपमाननम्। यदि प्रेष्येत तर्हि परशुप्रहारं प्राप्य कण्ठीरवः कथं वा सजीवं तिष्ठेत्? इतः



परं कण्ठीरवः देशस्य सेवार्थं न भविष्यति' इति चिन्ता तयोः। तथापि वचनपालनार्थं तौ कण्ठीरवं प्रेषितवन्तौ।

कण्ठीरवः तु सन्तोषेण एव प्रस्थितवान्। योधेन सूचितं मार्गम् अनुसरन् अरण्ये दिनद्वयं यावत् प्रयाणं कृतवान्।

निरन्तरेण प्रयाणेन श्रान्तः सः श्रान्तिपरिहारार्थम् अश्वात् अवतीर्य वृक्षस्य अधः उपविष्टवान्। स्वेदापनयनार्थं युतकं निष्कास्य अधः स्थापितवान्।

तावता कस्याश्चित् स्त्रियः कण्ठात् निर्गतः आर्तनादः तेन श्रुतः। सः झटिति उत्थाय स्वरम् अनुसृत्य धावितवान्। तत्र चोरैः आवृता काचित् राजकुमारी तेन दृष्टा। खड्गं



हस्ते गृहीत्वा आगच्छन्तं वीरगर्जनं कुर्वन्तं दृढकायं कण्ठीरवं दृष्ट्वा भीताः चोराः ततः पलायितवन्तः।

कण्ठीरवः राजकुमार्याः बन्धनम् अपनीय– 'का भवती? किं जन्मस्थलम्?' इत्यादिकं पृष्टवान्। राजकुमारी स्वस्य इतिवृत्तं सङ्क्षेपेण उक्त्वा– "आभरणाशया चोराः उद्याने विहरन्तीं माम् अत्र आनीतवन्तः" इति उक्तवती।

अनन्तरं सा कृतज्ञतावचनानि उक्त्वा, एकं महिमान्वितम् अङ्गुलीयकं दत्त्वा– "महर्षिणा दत्तम् एतत् अङ्गुलीयकं धरतु। यावत् एतत् भवता ध्रियते तावत् किमपि आयुधं भवन्तं व्रणितं कर्तुं न अर्हति" इति उक्तवती।

तदा कण्ठीरवः अङ्गुलीयकस्य स्वीकरणं निराकुर्वन्– "राजकुमारि! क्षन्तव्यः अहम्। अङ्गुलीयकं स्वीकर्तुं न इच्छामि अहम्। गतवर्षे अहम् कञ्चन योधं तदीयपरशुना कण्ठे प्रहृतवान्। अतः अस्मिन् वर्षे मया योधस्य प्रतिप्रहारः प्राप्तव्यः अस्ति। दत्तस्य वचनस्य पालनार्थम् अहं योधस्य समीपं गच्छन् अस्मि। प्रहारप्राप्तिसमये एतादृशस्य अङ्गुलीयकस्य धरणं युद्धनीतिविरुद्धम्। अतः एतत् मास्तु मम" इति उक्तवान्।

पुनः अल्पस्य कालस्य अनन्तरं कण्ठीरवः स्नानार्थं समीपस्थां नदीं गतवान्। तदा राजकुमारी वृक्षस्य समीपं गतवती। यदा स्नानं समाप्य कण्ठीरवः प्रत्यागतः तदा सा तत्र न आसीत्।

कण्ठीरवः ततः प्रस्थाय गिरिदुर्गं प्राप्तवान्। योधः परशुं हस्ते गृहीत्वा कण्ठीरवस्य प्रतीक्षां कुर्वन् आसीत्।

"वचनपालनं स्मरन् समये उपस्थितः यत् तादर्थम् अहं नितरां सन्तुष्टः अस्मि" इति उक्तवान् योधः।

कण्ठीरवः प्रहारं प्राप्तुं सिद्धः सन्– "मित्र! सिद्धः अस्मि। प्रहरतु तावत् परशुना। सकृत् एव प्रहारः दातव्यः इति मा विस्मरतु" इति धैर्येण उक्तवान्।

एतत् श्रुत्वा योधः उच्चैः हसन्– "सकृत् एव प्रहारः इति? किं सकृत् प्रहारस्य अनन्तरम् अपि अहं जीवेयम् इति आशा वा

भवतः? मूर्खः भवान्। द्वितीयप्रहारस्य आवश्यकता न भविष्यति एव'' इति उक्त्वा परशुम् उन्नीय बलेन कण्ठीरवं कण्ठे प्रहृतवान्।

परशुः अर्धभागं यावत् कण्ठे प्रविष्टः। किन्तु बिन्दुमात्रम् अपि रक्तं न आगतम्। कण्ठीरवः अविचलः स्थितः अस्ति। एतत् दृष्टवतः योधस्य कण्ठीरवस्य च महत् आश्चर्यम्! कण्ठीरवः परशुं कण्ठतः अपनीय कण्ठं स्पृष्टवान्। तत्र व्रणः अपि कोऽपि न आसीत्।

योधः कोपं प्राप्य– ''अये वञ्चक! अधर्मः मार्गः आश्रितः भवता'' इति वदन् पुनः प्रहारार्थं परशुम् उन्नीतवान्।

एतत् दृष्ट्वा कण्ठीरवः अपि क्रुद्धः सन् हस्तेन खड्गं गृहीतवान्।

तावता राजकुमारी पित्रा सह तत्र आगत्य तयोः युद्धं निवारितवती। ''उपकृतवतः कण्ठीरवस्य प्राणानां रक्षणार्थं तेन तिरस्कृतं चेदपि अङ्गुलीयकम् अहम् एव सः यथा न जानीयात् तथा तदीये कोषे स्थापितवती'' इति उक्तवती राजकुमारी।

अनन्तरं सा अरण्ये- उपस्थितां विपदं, कण्ठीरवेण कृतम् उपकारं चापि विस्तरेण पितरं निवेदितवती।

एतत् सर्वं ज्ञात्वा सन्तुष्टः योधः– ''भवतः धर्मबुद्धिः धैर्यं च श्लाघनीयम्'' इति कण्ठीरवस्य श्लाघनं कृतवान्।

कण्ठीरवस्य धर्मयुद्धप्रियतां, धैर्यम्, उपकारशीलतां च दृष्ट्वा सन्तुष्टः राजा कण्ठीरवाय स्वपुत्रीं दत्तवान्।

राजकुमारी-कण्ठीरवयोः विवाहः सवैभवं सम्पन्नः। नूतनौ वधूवरौ आशिषा अनुगृह्य योधः ततः निर्गतः आसीत्।

योधः कश्चन गन्धर्वः आसीत्। 'यदा धैर्यशाली कश्चित् भवतः परशुप्रहारं प्राप्य अपि सजीवं स्थास्यति तदा भवतः शापविमोचनम्' इति शापदात्रा उक्तम् आसीत्। तदनुगुणं शापविमोचनं प्राप्य स्वलोकं गतवान् आसीत् गन्धर्वः।





# आत्मगौरवहानिः

जयरामः नाम राजोद्योगी पूर्वम् आसीत्। तेन तु प्रतिमासं पञ्चशतं रूप्यकाणि प्राप्यन्ते स्म। अतः तस्य धनमदः आसीत्।

शिवरामः जयरामस्य बाल्यमित्रम्। सः परिश्रमशीलः। मार्गेषु शाकादिकं विक्रीय अन्यवाणिज्यम् अपि यथाशक्ति कुर्वन् सः अपि प्रतिमासं पञ्चशतं रूप्यकाणि सम्पादयति स्म। किन्तु जयरामः जनानाम् आदरं प्राप्नोति स्म, न तु शिवरामः।

जयरामः राजास्थाने उद्योगी इत्यतः सर्वे तं नमस्कुर्वन्ति। वार्तालापसमये अपि शिरः किञ्चित् अवनमय्य विनयेन व्यवहरन्ति। कार्यक्रमादिषु तस्य निमित्तं विशेषासनं परिकल्पयन्ति। बाल्यस्नेहितः अपि शिवरामः मत्समानः न इति चिन्तयन् सः शिवरामम् उपेक्षया एव पश्यति। शिवरामेण सह वार्तालापः अगौरवकरः इति भावयति सः।

एतत्सर्वं दृष्ट्वा शिवरामः खेदम् अनुभवति। बाल्ये बहुधा साहाय्यं कृतवान् आसीत् शिवरामः। किन्तु जयरामः तत्सर्वम् इदानीं न स्मरति।

'जयरामेण राजास्थाने कीदृशः आदरः प्राप्यते इति द्रष्टव्यम्' इति आलोच्य शिवरामः कदाचित् राजास्थानं गतवान्। तत्समये कश्चन अधिकारी जयरामं कठोरैः शब्दैः तर्जयन् आसीत्।

शिवरामः एतत् दृष्ट्वा समीपस्थम् अन्यम् उद्योगिनं पृष्टवान्– "श्रीमन्! जयरामवर्यम् एवं तर्जयन् सः अधिकारी कः? सः किमर्थं तथा तर्जयन् अस्ति?" इति।

तदा सः उद्योगी मन्दस्वरेण शिवरामम् उक्तवान्– "भोः, किञ्चित् मन्दस्वरेण वदतु तावत्। एवं तर्जयिता अस्माकम् अधिकारी। कोपशीलता तस्य स्वभावः। विना कारणम् एव सर्वान् तर्जयति सः" इति।

"सः अधिकारी उच्चस्थानीयः स्यात् नाम। एवं तर्जनं किं शोभते? तर्जनं श्रुत्वा कोऽपि प्रतिरोधं न आचरति वा?" इति पृष्टवान् शिवरामः।

"प्रतिरोधः करणीयः चेत् धैर्यम् आवश्यकम्। किन्तु तादृशं धैर्यं कस्यापि न भवति। यतः कोऽपि उद्योगात् च्युतिं प्राप्तुं न इच्छति। उद्योगच्युतिः जाता चेत् जीवननिर्वहणं क्लेशाय खलु? अतः सर्वे मौनं सहन्ते। जयरामः तु नितरां मृदुः। सर्वथा धैर्यहीनः। अतः अधिकारी तम् अधिकं तर्जयति" इति उक्तवान् राजोद्योगी।



प्रकोष्ठः अस्वच्छः अस्ति इत्यतः अधिकारी जयरामं तर्जयन् आसीत्। 'स्वच्छताकर्ता कर्मकरः न आगतः' इति उत्तरं दत्तवान् जयरामः। अनन्तरं स्वयं सम्मार्जनं कृतवान् सः। किञ्चित्कालानन्तरं पुनः तत्र आगतः अधिकारी– 'स्वच्छता सम्यक् न जाता। कर्मकरम् आह्वयतु तावत्' इति आदिष्टवान्। 'कर्मकरः इतोऽपि न आगतः' इति उत्तरं दत्तवान् जयरामः। 'तर्हि सः कुत्र गतः इति ज्ञात्वा अन्विष्य आनयतु' इति आदिष्टवान् अधिकारी। जयरामः ततः निर्गत्य सर्वत्र कर्मकरम् अन्विष्य कुत्रापि अप्राप्य निराशया विलम्बेन प्रत्यागतवान्। 'वृथा विलम्बः कृतः' इति पुनरपि तर्जितवान् अधिकारी।

जयरामस्य परिस्थितिं दृष्ट्वा खिन्नः अभवत् शिवरामः। 'मां दृष्ट्वा जनाः आदरेण न नमस्कुर्युः नाम, किन्तु कोऽपि माम् एवं अपमानजनकैः शब्दैः न तर्जयति। क्षुल्लकानि कार्याणि मद्द्वारा न कारयति अपि। अतः मम स्थितिः एव वरम्' इति आलोचितवान् शिवरामः। ततः मौनं निर्गतवान् च।

शिवरामस्य आगमनं, किञ्चित्कालं स्थितिं, पुनर्निर्गमनं च ज्ञातवान् आसीत् जयरामः। किन्तु शिवरामः यदा आगतः तदा जयरामस्य स्थितिः शोचनीया आसीत् इत्यतः सः शिवरामेण सह वार्तालापं न कृतवान् आसीत्। 'मया राजास्थाने यत् अपमाननम् अनुभूतं तत् सर्वत्र वदन् शिवरामः दुष्प्रचारं

कुर्यात्' इति भीतः जयरामः तस्मिन् एव दिने सायं पत्नीपुत्रादिभिः सह शिवरामस्य गृहं गतवान्।

यदा जयरामः शिवरामस्य गृहं गतवान् तदा शिवरामः, राजास्थाने उद्योगिनां कीदृशी दशा इति स्वपत्नीं वदन् आसीत्। तदा उपस्थितं जयरामम् उक्तवान् शिवरामः– "मित्र! समये उपस्थितं भवता। दिनद्वयतः कर्मकरी न आगता। अतः गृहे सर्वत्र अवकरः। भवान् किञ्चित् सम्मार्जयतु तावत्। योग्यां भृतिम् अहं ददामि" इति।

एतत् श्रुतवतः जयरामस्य महान् कोपः आगतः। सः कोपेन– "अये, गृहं प्रति आगतं मित्रम् एवम् अपमानयति वा? किं बुद्धिः अस्ति वा भवतः?" इति पृच्छन् शिवरामं सम्यक् निन्दितवान्।

जयरामस्य पत्नी खेदेन शिवरामम् उक्तवती– "मित्रस्य अपि कस्यचित् एवम् उपहासः न शोभते। उपहासः व्यथाजनकं न भवेत्" इति।

तदा शिवरामः जयरामपत्नीम् उक्तवान्– "भगिनि! 'राजास्थाने ये उद्योगिनः भवन्ति ते कोपं सर्वथा विस्मरन्ति, अन्येन निर्दयं तर्जितं चेदपि ते मौनं सहन्ते' इत्येतं विषयं सोदाहरणं मत्पत्नीपुत्राणां पुरतः निरूपयितुम् इच्छन् अहम् एतं तथा उक्तवान्। यतः मया राजास्थाने तादृशी स्थितिः दृष्टा आसीत्। किन्तु इदानीं मया ज्ञातं यत् राजास्थाने उद्योगिनः कार्यालये केवलं सर्वं सहन्ते, इतरत्र तु आत्मगौरववन्तः भवन्ति इति। मम मित्रं जयरामः राजास्थाने कथमपि तिष्ठेत् नाम, अन्यत्र तु साभिमानं व्यवहरति इति ज्ञातवतः मम महान् सन्तोषः" इति।

एतत् श्रुतवता जयरामेण यद्यपि लज्जा अनुभूता, तथापि आत्मगौरवस्य हानिः यदा भवति तदा अपि मौनं न स्थातव्यम् इति विषयः सम्यक् अवगतः। अतः सः अनन्तरकाले आत्मगौरवं रक्षन् उत्तमां कीर्तिं प्राप्तवान्।






## कांगरूपशवः

आष्ट्रेलिया कांगरूपशूनां देशः इति उच्यते। कांगरू शाकाहारी पशुः। एतस्य अग्रिमौ पादौ ह्रस्वौ। पृष्ठभागस्थौ पादौ सुदीर्घौ। अतः एषः उत्प्लवनपूर्वकं वेगेन गमने समर्थः भवति। एतेषु उन्नततमस्य औन्नत्यं ९ द्वादशाङ्गुलं (२.७४ मीटर्) भवेत्। एतस्य शिरसः आकारश्च अजशिरःप्रमाणकः भवेत्। अल्पाकारकाः अपि कांगरूपशवः भवन्ति। अत्यल्पाकारकः तु शशवद् भवति। तस्य आकारः जीवने न वर्धते एव।

## मकरमुखात् अश्रूणि

कश्चित् कापठ्येन अश्रूणि स्रावयति चेत् लोके जनाः किं वदन्ति? 'मकराश्रूणि स्रावयति एषः' इति खलु? किन्तु वस्तुतः मकराः अश्रूणि न स्रावयन्ति। तेषां शरीरे आवश्यकताम् अतिरिच्य स्थितं लवणांशं केचन ग्रन्थयः बहिः निस्सारयन्ति। जनाः एतत् अश्रुस्रावणम् इति भावयन्ति।







## कर्णहीनः भवति सर्पः

भवन्तः अहितुण्डिकं दृष्टवन्तः खलु? 'तस्य हस्ते स्थितस्य वाद्यस्य ध्वनिं श्रुत्वा सर्पः फणाम् उन्नयति' इति चिन्तनं तु भ्रमः एव। यदि सः हस्तस्थं वाद्यम् इतस्ततः न चालयेत् तर्हि सर्पः अपि फणां न कम्पयेत्। वस्तुस्थितिः एषा यत् सर्पस्य कर्णसदृशम् अङ्गं न भवति। किन्तु तस्य शरीरे ध्वनिग्रहणसमर्थाः ग्रन्थयः भवन्ति। अतः वयं वक्तुं शक्नमः यत् सर्पस्य समग्रं शरीरम् एव कर्णायते इति।

# सन्दर्शनं समाप्तं वा?

| | |
|---|---|
| I – केभ्यश्चित् दिनेभ्यः पूर्वं भवता आवेदनपत्रं प्रेषितम् आसीत् खलु? तद्विषये किमपि ज्ञातं वा? | You had submitted the application sometime back. Any response? |
| II – न किमपि ज्ञातम्। | Nothing yet. |
| I – सन्दर्शनं समाप्तं वा न वा इति किमपि ज्ञायते वा? | You have any idea about the interview? It is over or not? |
| II – न समाप्तम् इति श्रुतं मया। | I learnt it is not yet over. |
| I – तत् कथं ज्ञातं भवता? | How did you get to know? |
| II – मम मित्रं रमेशः अपि एतस्यैव स्थानस्य निमित्तम् आवेदनपत्रं प्रेषितवान्। सः विशेषश्रेण्याम् उत्तीर्णः। अन्यच्च चयनसमित्यां स्थितस्य कस्यचित् परिचयः अपि अस्ति तत्पितुः। तेन उक्तं– सन्दर्शनम् आगामिसप्ताहे भवेत् इति। | My friend Ramesh has also applied for the post. He has passed with high marks. And his father knows sombody in the selection committee. He told me that the interview may be held in the coming week. |
| I – तर्हि सन्दर्शनार्थम् आगन्तव्यम् इति सूचना तु भवता अपि प्राप्येत। | You may also be called for the interview then. |
| II – अहम् अपि तथैव भावयामि। उद्योगप्राप्तिः तु दैवानुग्रहाधीना। | I hope so. But getting the job depends on God's grace. |
| I – कतिस्थानानां निमित्तं चयनं क्रियते? | What is the number of vacancies? |
| II – त्रिंशत्स्थानानां निमित्तम्। आवेदनपत्राणि तु सहस्राधिकानि आगतानि इति श्रूयते। | Thirty. But it seems there are thousands of applications. |
| I – अहो, निरुद्योगसमस्या! | Oh, unemployment is terrible. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां एप्रिल्-९२ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'डिसेम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **परोपकारिणी ईश्वरसृष्टिः।**

द्वितीयचित्रम् - **जनमनस्तोषिणी मानवसृष्टिः।**

प्रेषकः - श्री सि.पि. स्वामिनाथन्, ७५, नाडार् वीथी-२, कोयम्बत्तूरु-१


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अनुकृतवान् - | Adopted | पुत्थलिका - | Idol |
| अवकरः - | Rubbish | प्रतिसङ्ग्रहः - | Withdraw |
| अहितुण्डिकः - | Snake-charmer | प्रातिवार्षिकी - | Happening every year |
| आज्यम् - | Ghee | फूद्गः - | Balloon |
| आवृत्तिः - | Round | भित्तिः - | Wall |
| कारण्डवः - | Duck | भीरुः - | Timid |
| कासरोगः - | Cough | भृतिः - | Wages |
| कांस्यम् - | Bronze | भृशम् - | Severely |
| केसरः - | Mane (of a horse) | मातुलः - | Maternal uncle |
| खलीनम् - | Bridle | युतकम् - | Shirt |
| गर्हयित्वा - | Having reprimanded | वरण्डकः - | Howdah (on an elephant) |
| गोष्ठम् - | Cowshed | | |
| जटिला - | Complicated | वस्त्रकटः - | Carpet |
| जानपदम् - | Folklore | वेत्रम् - | Cane |
| तर्जयिता - | One who reprimands | शलभः - | Lamp-fly |
| धिक्करोति - | Rejects | शशः - | Rabbit |
| ननान्दा - | Husband's sister | शास्त्रीयम् - | As prescribed in scriptures |
| नवोढा - | Newly-wed girl | | |
| नीरसता - | Disgust | शृङ्खला - | Chain |
| परशुः - | Axe | सकृत् - | Once |
| पिच्छम् - | Feather | हस्तिपकः - | Mahout |
| पिञ्जः - | Switch | हेषारवः - | Neighing. |

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 216.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 216.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.




मिठाई में
नारियल
मुँह में
हलचल




nutrine
COOKIES




बच्चे झूमें-गायें, मौज मनायें
कोकानाका कुकीज




Visesh/NC/9090/Hin